जीर्णेऽन्ने तुल्यपन्ने च पित्तं हन्त्युदरानलम्।
करोति गुल्मं शूलं वा तथा श्रान्ते बहूदकम्॥
तस्माज्जीर्णेऽनलं हन्ति अजीर्णे वारि भेषजम्।
भुक्त्यन्तात्परतः शस्तं पीतं वारि गुणात्मकम्॥
अध्वश्रान्ते क्षुधाक्रान्ते शोकक्रोधातुरेषु च।
विषमासनोपविष्टे पीतं वारि रुजाकरम्॥
तस्मात् प्रसन्ने मनसि पानीयं मन्दमाचरेत्।
तृष्णा गरीयसी घोरा मद्यः प्राणविनाशिनी।
तस्माद्देयं तृषार्त्ताय पानीयं प्राणधारणम्।
तृषितो मोह मायाति मोहात् प्राणान् विमुञ्चति॥
अतः सर्वास्ववस्थासु न क्वचिद्वारि वार्य्यते।
आदौ पीतं दहत्यग्निं मध्ये पीतं रसायनम्॥
तदन्ते च जलं पीत तज्जलं दुर्जरं भवेत्।
भोजनादौ जल पीतमग्निसादं कृशाङ्गताम्॥
अन्ते करोति स्थूलत्व मूर्द्ध्वमामाशयात् कफम्।
मध्ये मध्याङ्गतां साम्यं धातूनां जरणं सुखम्॥

इति तोयपानविधिः।

इति श्रीमदात्रेयभाषिते हारीतोत्तरे तोयवर्गो नाम
सप्तमोऽध्यायः।

---

## अष्टमोऽध्यायः।

अथातः संप्रवक्ष्यामि क्षीरवर्गन्तु वत्सक !।
दधि सर्पिर्वसा तक्रं तेषां सर्वगुणागुणम्॥
यद् यदाहारजातन्तु रसं क्षीरशिरानुगम्।
सरो जलस्य भुक्तस्य तथा पित्तेन संयुतम्॥
पाचितं जाठरे वह्नौ पित्तेन सह मूर्च्छितम्।

पच्यमानं शिराप्राप्तं चीरं तद्दिद्धि पुत्रक ! ॥
तेन चीरमितिख्यातमग्निसोमात्मकं पयः।
अमृतं सर्वभूतानां जीवनं वलकृन्मतम् ॥
हारीतः संशयापन्नः पप्रच्छ पितरं पुनः।
कथं रसस्य सम्पत्तिः कथं सञ्चीयते विभो ! ॥
कथं रक्तस्य संस्थाने चीरं पाण्डुत्व मीयते।
कथं तत्र कुमारीणां वन्ध्यानां न कथं भवेत् ॥
एवं पृष्टो महाचार्य्यः प्रोवाच मुनिपुङ्गवः।
शृणु पुत्र ! महाप्राज्ञ ! यदुक्तं पूर्वसूरिभिः ॥
चीरं स्निग्धं तथा रक्तं पित्तेन पाकतां गतम्।
रक्तं श्वेतत्व मायाति तथा चीरं सितं भवेत् ॥
चीरनाडी कुमारीणां वन्ध्यानां न कथं भवेत्।
अल्पधातुवल यस्मात् तस्मात् चीरं न जायते ॥
वन्ध्यानां चीरनाड्यस्तु वातेन परिपूरिताः।
चीरञ्च न भवेत्तस्मादाद्रत्वं चाधिकं यतः ॥
प्रसूतासु च नारीषु वलेन सह सूयते।
तेन स्रोतोविशुद्धिः स्यात् चीरमाशु प्रवर्त्तते ॥
तस्मात सद्यःप्रसूतायां जायते श्लेष्मिकं पयः।
तेन काठिन्यमायाति तस्मात् तत् परिवर्जयेत् ॥
स्रोतोविशुद्धिकरणं बलकृद्दोषनाशनम्।
पयस्त्रिदोषशमनं वृष्यञ्चाग्निप्रवर्द्धनम् ॥
कृष्णा वृष्या च वातघ्नी पयस्तस्या विशिष्यते।
श्वेता पयः श्लेष्मकृच्च वातिकं रक्तिकापयः ॥
पित्तसंशमनी पीता तस्याः चीरं विशिष्यते।
कृष्णासृक् पित्तसंयुक्ता श्वेता श्लेष्मगुणान्विता ॥
कफवाताश्रिता पीता रक्ता वातगुणान्विता।

अष्टद्रवगुणास्तद्वज्ज्ञातव्याश्च महामते !॥
धारोष्णं शस्यते गव्यं धाराशीतन्तु माहिषम्।
शृतोष्णमाविकं पथ्यं शृतशीतमजापयः॥

ाव्यं पवित्रञ्च रसायनञ्च पथ्यञ्च हृद्यं बलपुष्टिदं स्यात्।
प्रायुःप्रदं रक्तविकारपित्तत्रिदोषहृद्रोगविषापहं स्यात्॥

इति गवां पयोगुणाः।

छागं कषायं मधुरञ्च शीतं ग्राहि त्वयच्चिल्लघु पित्तहारि।
कामज्वराणां रुधिरातिसारे हितं पयस्छागलजं त्रिदोषजित्।

इत्यजापयोगुणाः।

औरभ्रं मधुरं रूक्षमुष्णं वातकफापहम्।
न शस्त रक्तपित्तिनां वातिकानां हितं भवेत्॥

इति मेषीपयोगुणाः।

स्निग्ध महच्छीतकरञ्च तन्द्रानिद्राकरं वृष्यतमं श्रमघ्नम्।
ालप्रदं पुष्टिकरं कफस्य सञ्जीवनं माहिषमुच्यते पयः।

इति महिषीपयोगुणाः।

रुक्षं तथोष्णं लवणं कफस्य निवारणं वातविकारहारि।
लघु प्रशस्तं कटुकं क्रमीणां शोफाशंभामोष्ट्रपयोऽनुकूलम्॥

इति उष्ट्रीपयोगुणाः।

सञ्जीवनं बृंहणमेव सात्म्य सन्तर्पणं नेत्ररुजापहञ्च।
पित्तस्य रक्तस्य च नाशनञ्च नारीपयः स्नेहनमेव शस्तम्।

इति नारीपयोगुणाः।

निशाशीतांशुसंशीतं निद्रालस्यश्रमानुगम्।
कफकृत् सघनं शीतं क्षीरं प्राभातिक भवेत्॥

इति प्राभातिकक्षीरगुणाः।

वासरे सूर्य्यसन्तापात् सदोष्णं कफवातजित्।
हितं तत्पित्तशमनं सुशीत भोजने निशि॥

इति दिनक्षीरगुणाः।

अल्पाम्बुपानव्यायामात् कटुतिक्ताशनैर्लघु ।
पिण्याकाम्लाशिनीनान्तु गुर्वभिष्यन्दि शीतलम् ॥
क्षीणानां दुर्बलानाञ्च तथा जीर्णज्वरार्दिते ।
दीप्ताग्नीनामतन्द्रानां श्रमशोषविकारिणाम् ॥
व्यवायिस्वल्पवीर्य्याणां श्वासिनां विषमाग्निनाम् ।
राजयक्ष्मायुतानाञ्च क्षीरपानं विधीयते ॥
न शस्तं लवणैर्युक्तं क्षीरं चाम्लेन वा पुनः ।
करोति कुष्ठं त्वग्दोषं तस्मान्नैव हितं मतम् ॥

इति क्षीरपानविधिः ।

आम्लं स्वादुरसं ग्राहि गुरूष्णं वातरोगजित् ।
मेदः शुक्रबलश्लेष्म रक्तपित्ताग्निशोफकृत् ॥
स्निग्धं विपाके मधुरं दीपनं बलवर्द्धनम् ।
वातापहं पवित्रञ्च दधि गव्यं गुणप्रदम् ॥

इति गव्यदधिगुणाः ।

आजं दधि भवेच्छीतं क्षयवातविनाशनम् ।
दुर्नामश्वासकासेषु हितमग्निप्रदीपनम् ॥
विपाके मधुरं वृष्यं रक्तपित्तप्रसादनम् ।
शस्तं कार्श्यापहं प्रोक्तं वातपित्तनिवर्हणम् ॥

इति आजदधिगुणाः ।

घनं माहिषमुद्दिष्टं मधुरं रक्तदोषकृत् ।
कफशोफहरं शस्तं पित्तकृत् वातकोपनम् ॥

इति माहिषदधिगुणाः ।

आविकं पित्तकृद्वातशमनं कफकोपनम् ।
गुल्मार्शःकुष्ठरोगे च रक्तपित्ते न शस्यते ॥

इति आविकदधिगुणाः ।

शारदं दधि गुर्वम्लं रक्तपित्तविवर्द्धनम् ।

शोफतृष्णाज्वरार्त्तानां करोति विषमज्वरम्॥

इति शारददधिगुणाः।

गुरु स्निग्धं च मधुरं कफकृद्बलवर्द्धनम्।
वृष्यं मेध्यञ्च हैमन्तं पुष्टिदं तुष्टिवर्द्धनम्॥

इति हैमन्तदधिगुणाः।

शैशिरं मथनं चाम्लं मधुरं गुरुमेव च।
वृष्यं बलकरं पित्तश्रमापहरणं परम्॥

इति शैशिरदधिगुणाः।

वासन्तं मधुरं स्निग्धं किञ्चिदम्लं कफात्मकम्।
बलहृद्दौर्ब्बल्यहृत् प्रोक्तं वसन्ते न प्रशस्यते॥

इति वासन्तदधिगुणाः।

लघु चाम्लं भवेद्ग्रैष्मे चात्युष्णं रक्तपित्तकृत्।
शोषभ्रमपिपासाकृत् दधि युक्तं न ग्रीष्मके॥

इति ग्रीष्मदधिगुणाः।

वार्षिकं हितकृत् प्रोक्तं दधि शस्तं न दोषलम्।
शोषवातभ्रमान् हन्ति श्रमातिसारनाशनम्॥

इति वार्षिकदधिगुणाः।

शरद्ग्रीष्मवसन्तेषु दोषकृत् न हितं भवेत्।
हेमन्ते शिशिरे चैव वर्षासु तद्धितं मतम्॥
न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम्।
नालवणं हि भुञ्जीत भुञ्जीतोदकमिश्रितम्॥
लवणाम्बु समायुक्तं दधि शस्तं निशि ध्रुवम्।
ज्वरासृक् पित्तवैसर्पिकुष्ठिनां पाण्डुरोगिणाम्॥
संप्राप्तकामलानाञ्च शोफिनाञ्च विशेषतः।
विशेषाद् यक्ष्मरोगे च अपस्मारे च पीनसे॥

प्रतिश्यायार्दितानाञ्च भोजने न हितं दधि।

इति दधिवर्जनम्।

हिक्कश्वासार्शःप्लीहानामतीसारे भगन्दरे।
शस्तं प्रोक्तं दधि ह्येषां लवणेन विमूर्च्छितत् ॥

इति दधिभोजनविधिः।

गव्यं त्रिदोषशमनं तक्रं श्रेष्ठन्तदुच्यते।
दीपनं रुचिकृच्चैव सर्व्वोदरविकारजित् ॥

इति गव्यतक्रगुणाः।

माहिषं कफकृत् किञ्चिद्घनं शोफकरं नृणाम्।
प्लीहार्शोग्रहणीगुल्मपाण्डामयविनाशनम् ॥

इति माहिषतक्रगुणाः।

छागलं लघु संस्निग्धं त्रिदोषशमनं परम्।
गुल्मार्शोग्रहणीशूलं पाण्डुामय विनाशनम् ॥

इति छागीतक्रगुणाः

तथाच त्रिविधं तक्रं कथ्यते शृणु पुत्रक !।
यथा योगेन तत्सम्यक् शस्यते येषु रोगिषु ॥
समुद्धृतघृतं तक्रमर्द्धोद्धृतघृतञ्च यत्।
अनुद्धृतघृतं चान्यदित्येतत् त्रिविधं मतम् ॥
सर्वं लघु च पथ्यञ्च त्रिदोषशमनं परम्।
ततःपरं वृष्यतमं क्रमेण समुदीरितम् ॥
समुद्धृतघृतं तक्रं लघु पथ्यतमं मतम्।
गरोदरार्शोग्रहणीपाण्डुरोगज्वरातुरे ॥
वर्चो मूत्रग्रहे वापि प्लीहाष्ठापदमेहिषु।
हितं संप्रीणनं वल्यं पित्तरक्तविरोधकृत् ॥
अर्द्धोद्धृतघृतं तस्माद् वृष्यं गुरु कफप्रदम्।

मधुरं पित्तरक्तघ्नं श्रमघ्नं परमं मतम् ॥
अनुद्धृतघृतं सान्द्रं गुरु विद्यात् कफावहम्।
बलप्रदन्तु चीणानामामशोफातिसारकृत् ॥

इति विविधतक्रगुणाः।

समरं निर्जलं घोलं मथितं सरवर्जितम्।
अर्द्धोदकमुदश्वित्स्यात्तक्रं पादजलान्वितम् ॥
बहुदकं दीपनीयं रक्तपित्तप्रकोपनम्।
पीनसे श्वासकासे च न शस्तमिदमुच्यते ॥
वातपित्तहरं घोलं भवेत्तद् विद्धि पुत्रक !।
करेण मर्दितं यत्तु तर्पणं कफपित्तनुत् ॥
उदश्वित्कफलं बल्यं श्रमहृत् परमं मतम्।
तक्रं ग्राहि कषायाम्लं वीर्य्योष्णं दीपनं लघु ॥
श्रमापहरणं स्निग्धं ग्रहण्यर्शोऽतिसारनुत्।
इति तक्रगुणाः प्रोक्ता न दद्याद् यत्र तच्छृणु ॥
क्षते शोफे च रोगाणां नोष्णकाले शरत्सु च।
संमूर्च्छाभ्रमतृष्णासु तथा च रक्तपित्तके ॥
न शस्तं तक्रपानञ्च करोति विविधान् गदान् ॥

एतेषां तक्रं निषिद्धम्।

शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च।
मार्गावरोधे दुष्टेऽग्नौ गुल्मार्शसि प्रशस्यते ॥
शस्तं प्रोक्तं तक्रपानममीषां सर्वदा हितम्।
सर्वकालेषु तच्छस्तं दीपनं लवणान्वितम् ॥

एतेषु तक्रं पथ्यतमम्। इति तक्रविधिः।

नवनीतं नवं ग्राहि हृद्यं रोचनदीपकम्।
चयारुच्यर्दितप्लीहग्रहण्यर्शोविकारनुत् ॥
चक्षुष्यं शिशिरं स्निग्धं वृष्यं जीवनबृंहणम्।

क्षीरोद्भवं हिमं ग्राहि रक्तपित्ताक्षिरोगनुत्॥
स्मृत्यायुरग्निशुक्रौजःकफमेदोविवर्द्धनम्।
वातपित्तकफोन्मादशोषालक्ष्मीज्वरापहम्।
सर्वदोषापहं शीतं मधुरं रसपाकयोः॥

इति नवनीतविधिः

कृष्णाया गोः पयःफेनमजानां वातिशस्यते।
मन्दाग्नीनां कृशानाञ्च विशेषादतिसारिणाम॥
उत्साहदीपनं बल्यं मधुरं वातनाशनम्।
सद्योबलकरञ्चैव तस्याः क्षीरं विलोडितम॥
क्षीणे ज्वरेऽतिसारे च कासे च विषमज्वरे।
मन्दाग्नौ कफमाश्रित्य पयःफेनं प्रशस्यते॥
गवान्तु क्षीरफेनं वा तक्रेण सहितं तथा।
पक्वाम्रं भक्षयेद्वापि ग्रहणी तस्य नश्यति॥
ताम्बूलं नव सेवेत क्षीरं पीत्वा तु मानवः।
यावत्तत्र भवेत् क्षीरं भुक्तान्नद्वारि शस्यते।

इति फेनविधिः

विपाके मधुरं वृष्यं वातपित्तकफापहम्।
चक्षुष्यं बलकृन्मेध्यं गव्यं सर्पिर्गुणोत्तमम॥

इति गव्यघृतम्

आजं मन्दोपनीयञ्च चक्षुष्यं बलवर्द्धनम्।
कासे श्वासे क्षयेऽर्शे तल्लघु पाके कफापहम्॥

इति अजघृतम्।

वातपित्तशमं सर्वं सुशीतं माहिषं घृतम्।
मधुरं गुरु विष्टम्भि भवत्यल्पगुणात्मकम्॥

इति माहिष घृतम्।

औष्ट्रं कटु घृतं पाके शोषकृमिविषापहम्।

दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम्॥

इति उष्ट्रीघृतम्।

पाके लघ्वाविकं सर्पिः सर्वरोगविषापहम्।
वृद्धिं करोति चास्थीनां वाश्मरीशर्करापहम्॥

इति आविकं घृतम्।

वृद्धिङ्करोति देहाग्नेर्लघुपाके विषापहम्।
चक्षुष्यं दीपनञ्चाग्नेर्वातदोषनिवारणम्।
वृद्धि करोति चास्थीनां तत्प्राशञ्च विषापहम्॥

इति अश्वीघृतम्।

कफेऽनिले योनिदोषे शोषे पित्तेषु तद्धितम्।
मात्रं स्त्रीणाञ्च चक्षुष्यं सर्पिः स्यादमृतोपमम्॥

इति नारीघृतगणाः।

तर्पणं नेत्ररोगघ्नं दाहहृत् पयसोघृतम्।

इति चीरोद्भवघृतम्।

दोषापहं वह्निमन्धुत्तणञ्च मूर्च्छादिकोन्मादकर्णाचिशूले।
शोफार्शसोर्योनिदोषे व्रणेषु शस्तं सर्पिर्जीर्णमेव नृणां स्यात्॥
उग्रगन्धं पुराणं स्याद्दशवर्षोषितं घृतम्।
यथा यथा जरां याति गुणवत् स्यात्तथा तथा।

इति जीर्णघृतगणाः।

बालक्षये तर्पणभोजनेषु श्रमेषु पित्तासृजि रोगयुक्ते।
वातामये कामलपाण्डुरोगे क्षये न सर्पिश्च वदन्ति शस्तम्॥
ज्वरे विबन्धेषु विसूचिकाया मरोचके वा शमिते तथाग्नौ।
पानात्ययेश्वापि मदात्यये वा शस्तं न सर्पिर्बहु मन्यते सुधीः॥

इति घृतवर्गः।

इति श्रीमद्धर्षिवियभाषिते हारीतोत्तरे अष्टमोऽध्यायः।

——

## नवमोऽध्यायः।

मूत्रं गोजाविमाहिष गजाश्वोष्ट्रखरोद्भवम्।
मूत्रं मानुषजं चान्यत् समासेन गुणान् शृणु॥

तीक्ष्णं चोष्णं क्षारमेवं कषायं मेध्यं लघ्वाश्लेष्महारम्यग्निभृच्च।
तन्माङ्गल्यं रक्तपित्तप्रभेदि भ्रूशङ्ककण्ठहृनुरोगहृच्च॥

कण्डूकिलासगदशूलमुखाक्षिरोगान्
गुल्मातिसारमरुदामयमूत्ररोधान्।
कासं सकुष्ठजठरक्रिमिरोगजालं
गोमूत्रमेकमपि पीतमहो निहन्ति॥

इति गोमूत्रगुणाः।

आजं मूत्रं तीक्ष्णमुष्णं कषायं योज्यं पाने शूलगुल्मार्त्तिनाशि।
कासश्वासकामलापाण्डुरोग अर्शांसिनां श्रेष्ठमेतद्वदन्ति॥

इत्याजमूत्रम्।

सक्षारं कटुकं तिक्तं मूत्रं वातघ्नमाविकम्।
दुर्नामोदर शूलघ्नं कुष्ठमेहविशोधनम्॥

इति मेषमूत्रम्।

क्षारं सुतिक्तं कटुकं कषायं प्रभेदि वातस्य समङ्करोति।
पित्तप्रकोपि महिषस्य मूत्रं गुल्मार्शं पाण्डूदरशूलनाशम्॥

इति महिषीमूत्रगुणाः।

सुतिक्तं लवणं भेदि वातघ्नं कफकोपनम्।
क्षारं मण्डलकुष्ठानां नाशनं गजमूत्रकम्॥

इति गजमूत्रगुणाः।

कफकासहरं छर्दिं क्रमिदद्रुविनाशनम्।
दीपनं कटु तीक्ष्णोष्णं वातश्लेष्मविकारनुत्॥

इति अश्वमूत्रगुणाः।

औष्ट्रं कफहरं रूक्षं क्रिमिदद्रुविनाशनम्।
अर्शं कुष्ठोदरोन्माद शोथार्शःक्रिमिवातनुत्॥

इति औष्ट्रमूत्रगुणाः।

गार्दभं वा घनं मूत्रं तैलयोग्यं क्वचिद् भवेत्।
सक्षारं तिक्त कटुकमुन्मादकुष्ठरोगजित्॥

इति गर्दभमूत्रगुणाः।

मानुषं क्षारकटुकं मधुरं लघु चोच्यते।
चक्षूरोगहरं वल्यं दीपनं कफनाशनम्॥

इति नरमूत्रगुणाः।

असूताया घनं मूत्रं प्रसूताया भवं लघु।
न हि गुणविशेषःस्यात् समता पाकवीर्य्ययोः॥

असूतायाः प्रसूतायाश्च मूत्रगुणाः।

सौरभेयकमूत्रन्तु घनं सान्द्रं प्रशस्यते।
तच्च वृषणहीनानां किञ्चिल्लघुतरं मतम्॥
वृषमूत्रञ्च शोफघ्नं क्रिमिदोषविनाशनम्।
कामलाग्रहणीपाण्डुनाशनं चाग्निदीपनम्॥
अजागवीभवं मूत्रं पाने शस्तं भिषग्वदेत्।
आविकं माहिषं चाश्व तैलपाके विधीयते॥
गजमूत्रप्रलेपश्च कण्डूदद्रुविसर्पनुत्।
कारभ खरमूत्रं वा तैले नस्ये विधायकम्॥

इति मूत्रवर्गाध्यायः।

---

अथातः संप्रवक्ष्यामि इक्षुवर्गं गुणाधिकम्।
रसायनोत्तमं वल्यं रोगवारणमुत्तमम्॥
स्निग्धञ्च तर्पणं वृष्यं वृंहणं च सजीवनम्।
स्वादुगुणाभिवद्धत्वाद्वातपित्तप्रशान्तिकृत्।

वृष्योऽप्यम्लविदाही स्यात् सितेक्षुः कफकृन्मतः॥

इति श्वेतेक्षुगुणाः।

तद्वत् सुकृष्णो भवनं गुणानां वृष्यो भवेत्तर्पणदाहहन्ता।
सञ्जीवनं स्यान्मधुरो रसेन शोषापहर्त्ता व्रणशोफकारी॥

इति कृष्णेक्षुगुणाः।

यन्त्रेण पीडितरसः कथितो गुरुश्च
वृष्यः कफञ्च कुरुतेऽथ सुशीतलश्च।
पाके विदाही बलकृच्च सुशोभनश्च
संसेवितो रुधिरपित्तरुजं निहन्ति॥

इति यन्त्रोद्भवरसगुणाः।

दन्तैर्निष्पीड़ितरसो रुचिकृद्गुरुश्च
सन्तर्पणो बलकरः कफकृत् श्रमघ्नः।
विष्टम्भकारी रुधिरस्य तथैव पित्त-
दोषं निहन्ति सकलं वमनञ्च शोषम्॥

इति दन्तनिष्पीड़ितरसगुणाः।

रसः पर्युषितो नेष्टो ह्यम्लो वातापहो गुरुः।
कफपित्तकरः शोषी भेदनश्चाथ मूत्रलः॥

इति पर्युषितरसगुणाः।

पक्वो गुरुतरः स्निग्धः सतीक्ष्णः कफवातहा।
पित्तघ्नोऽपि विशेषेण गुल्मातीसारकासनुत्॥

इति पक्वरसगुणाः।

फाणितं गुर्वभिष्यन्दि बृंहणं कफशुक्रलम्।
पित्तघ्नं श्रमहारि स्यात् रक्तदोषनिसूदनम्॥

इति फाणितरसगुणाः।

बल्यो वृष्यो गुरुः स्निग्धो वातघ्नो मूत्रशोधनः।
नातिपित्तहरो मेध्यः कफक्रिमिकरो गुड़ः॥

पित्तघ्नो मधुरः शुद्धो वातघ्नो मूत्रशोधनः।
स पुराणोऽधिकगुणो गुल्मार्शोऽरोचकापहः॥
क्षये कासे क्षतक्षीणे पाण्डुरोगेऽसृजःक्षये।
हितो योगेन संयुक्तो गुड़ः पथ्यतमो मतः॥
गुदामये कामलशोथमेहे गुल्मामये पाण्डुहलीमके च।
वाते सपित्तासृजि राजरोगे रुचिप्रदो रोगहरो गुड़ःस्यात्॥
कासे शोफे गुड़ो नेष्टः अन्यत्रापि हितो मतः।
योगयुक्तोऽपि सर्वत्र हितो गुणगणो न यः॥
क्षामक्षीणे पवनकुपिते श्वासमूर्च्छातुराणां
अध्वश्रान्तश्रममदविषे मूत्रकृच्छ्राश्मरीणाम्।
जीर्णः क्षामज्वरविषमगे रक्तपित्तप्रकोपे
तृष्णादाहक्षयरुधिरगे सर्वरोगान् निहन्ति॥

इति गुड़गुणाः।

मत्स्यण्डी सिता मधुरा वातपित्तविनाशिनी।
किञ्चित् शीतगुणोपेता बल्या वृष्या रुचिप्रदा॥

इति मत्स्यण्डीगुणाः।

वातपित्तहरं शीतं स्निग्धं बल्यं सुखप्रियम्।
चक्षुष्यं श्लेष्मकृत्प्रोक्तं खण्डं वृष्यतमं मतम्॥

इति खण्डगुणाः।

शीता रुच्यतमा प्रोक्ता वृष्या शुक्रविवर्द्धिनी।
पित्तघ्नी मधुरा बल्या शर्कराप्यायिनी नृणाम्॥
शर्कराख्या सुसिता च कासशूलप्रमर्दिनी।
हिताऽपित्तासृजि शोषे मूर्च्छाभ्रमिगदापहा॥

इति शर्करागुणाः। इति इक्षुवर्गः।

मन्थानं शीतलं बल्यं महातिसारनाशनम्।
सुस्वादु शीतलं चैव बृंहणं तण्डुलोदकम्॥

इति तण्डुलोदकगुणाः।

तुषोदकं वातहरं प्रभेदि प्रकोपयेत् रक्तपित्तं सदैव ।
विपाचनं स्याज्जरणं कृमिघ्नमजीर्णहन्ता कटुकं विपाके ॥

इति तुषोदकगुणाः ।

जातं यवाम्लं कटुकं विपाके वातापहं श्लेष्महरं सरक्तम् ।
पित्तप्रकोपं कुरुते सभेदि विदूषणं पित्तगदासृजश्च ॥
मूर्च्छापहं काञ्जिकमेव रुच्यकं गोधूमजं शूलहरं कषायकम् ।
सन्दीपनं स्याज्जरणं हि वातनुत्त्वजीर्णदोषं हरते सदैव च ॥

इति यव-गोधूम-काञ्जिकगुणाः ।

युगन्धराम्लं कफवातहन्तृ शूलामयानां जरणं करोति ।
तीक्ष्णं तथाम्लं श्रमदोषहन्तृ मेहार्शसोऽसृग्हितकृन्मतञ्च ॥

इति युगन्धराम्लगुणाः ।

शोषे मूर्च्छाज्वरार्त्तानां भ्रमकण्डूविपादिते ।
कुष्ठेषु रक्तपित्तेषु काञ्जिकं न प्रशस्यते ॥
पाण्डुरोगे यक्ष्मगदे तथा शोफातुरेषु च ।
क्षतक्षीणे पथिश्रान्ते मन्दज्वरनिपीड़िते ।
तेषां नैव हितं प्रोक्तं काञ्जिकं दोषकारकम् ।

इति काञ्जिकपरिहारः ।

पीतं जरयते चामं बाह्यदाहश्रमापहम् ।
लेपने कुष्ठकण्डूघ्नं तैलयुक्तं समीरहृत् ॥
शूलं वातार्दितानान्तु तथाजीर्णविबन्धिनाम् ।
श्रेष्ठं प्रोक्तं तथाम्लञ्च गुणाधिक्यं नरेषु च ॥

इति काञ्जिकवर्गः ।

धान्यमण्डं पित्तहरं श्रमघ्नश्वाश्मरीहरम् ।
वातलं रक्तशमनं ग्राहि सन्दीपनं परम् ॥

इति धान्यमण्डगुणाः ।

युगन्धरानां मण्डन्तु श्लेष्मकृद्वातलं मतम् ।

पित्तसंभ्रमशोषघ्नं मूत्रलं ग्राहणञ्च तत्॥

इति युगन्धरमण्डगुणाः।

रक्तशाल्युद्भवं मण्डं मधुरं ग्राहि शीतलम्।
प्रमेहानश्मरीं हन्ति वातलं पित्तहृत्तथा॥

इति रक्तशालिमण्डगुणाः।

मधुरं शीतलं किञ्चित् श्लेष्मलं शोषनाशनम्।
अश्मरी-मेह-संच्छेदि वातलं श्वेततण्डुलम्॥

इति श्वेततण्डुलमण्डगुणाः।

यवमण्डं कषायं स्याद् ग्राहि चोष्णं विपाकि च।

इति यवमण्डगुणाः।

तद्वद्गोधूममण्डं मधुरं पित्तवारणम्।

इति गोधूममण्डगुणाः।

ग्लानिमूर्च्छाकरं मण्डः कोद्रवाद्यकृतं लघु।

इति कोद्रवमण्डगुणाः।

तद्वच्च क्षुद्रधान्यानां वातलं पित्तकारकम्।
करोति शोषदं गुल्मं प्रतिश्यायादिकोपनम्॥

इति क्षुद्रधान्यमण्डगुणाः। इति मण्डवर्गः।

अथातो यूषवर्गाध्यायं व्याख्यास्यामः।

कुलत्थयूषो मधुरः कषायः कफं सपित्तं विनिहन्ति शोषम्।
तथाश्मरीपाण्डुजमेदहन्ता सन्दीपनो मूत्रविशोधनश्च॥

इति कुलत्थयूषगुणाः।

आढक्यायूषं मधुरञ्च शीतं विशोषणं वातनिवारणञ्च।
श्लेष्मापहं पित्तहरं नराणां क्रिमिं निहन्यादपि दारुणञ्च॥

इति आढकीयूषगुणाः।

शीतलं मधुरं मौद्गं यूषं पित्तविकारजित्।

वातदोषहरं प्रोक्तं ज्वराणां शमनं परम्॥

इति मुद्गयूषगुणाः।

मासूरो ग्राहको यूषो बृंही स्वादुः प्रमेहजित्।
पित्तश्लेष्मज्वरघ्नः स्यात्तथातीसारनाशनः॥

इति मासूरयूषगुणाः।

कषायं कटुकञ्चोष्णं वातघ्नं पुंस्त्वदोषकृत्।
रक्तपित्तं निहन्त्याशु चणानां यूषमुच्यते॥

इति चणकयूषगुणाः।

घनं सवातं कफकृन्माषयूषं सपित्तकृत्।
अम्लं पर्य्युषितं तच्च शस्यते तैलपाचने॥

इति माषयूषगुणाः।

अन्यानि चैव शस्तानि कौलत्थान्युषितानि च।
मसूरास्त्रिपुटा बल्याः कलायाद्याश्च वर्जिताः॥

इति यूषविधिः।

अथातः संप्रवक्ष्यामि तैलानाञ्च गुणागुणम्।
तच्च ज्ञेयं समासेन यथायोगं यथाविधि॥
कषायानुरसं स्वादु सूक्ष्ममुष्णं व्यवायि च।
पित्तकृद्वातशमनं श्लेष्मरोगादिवर्द्धनम्॥
अल्पं रुचिकरं मेध्यं कण्डूकुष्ठविकारनुत्।
वृष्यं श्रमापहं ज्ञेयं तिलतैलं विदुर्बुधाः॥
छिन्ने भिन्ने च्युते घृष्टे क्षते भग्नेऽग्निदाहके।
वाताभिष्यन्दि स्फुटने चाभ्यङ्गे तिलतैलकम्॥
विषे व्यालशौनसर्प्याः सेकाभ्यङ्गावगाहने।
पाने वस्तौ च नस्ये च तथा कर्णप्रपूरणे।
तिलतैलं विधेयं स्यात् सर्व्वरोगनिवारणे॥

इति तिलतैलगुणाः।

कटुतिक्तं तथा ग्राहि स्यात् उष्णं कफवातनुत्।
क्रिमिकण्डूशोधनं स्यात् पित्तकृत् सार्षपं स्मृतम्॥
कर्णरोगे क्रिमिरोगे तथा वातामयेषु च।
कण्डूकुष्ठामये चैव कफमेदोव्रणेषु च॥
प्रशस्तं सार्षपं चैषां रोगिणाञ्च विभावयेत्।
वस्तिकर्मणि नो शस्तं पित्तदाहकरं महत्॥

इति सार्षपतैलगुणाः।

अतसीप्रभवं तैलं घनं मधुरपिच्छिलम्।
पाके कटूष्णवीर्य्यञ्च वातश्लेष्मनिवारणम्॥

इति अतसीतैलगुणाः।

एरण्डजं घनञ्चापि शीतमेव मृदु स्मृतम्।
हृद्वस्तिजङ्घाकट्यूरु शूलानाहविबन्धनुत्॥
आनाहाष्ठीलवात्तासृक्प्लीहोदावर्त्तशूलिनाम्।
वातपित्तविकाराणां विदध्याच्च प्रशान्तये।
तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तमेरण्डसम्भवम्॥

इति एरण्डतैलगुणाः।

सहकारोद्भवं तैलं रूक्षं वातकफापहम्।
रसे कषायमधुरं तिक्तास्लं नातिपित्तकृत्॥

इति सहकारतैलगुणाः।

कौसुम्भतैलमुष्णन्तु विपाके कटुकं गुरु।
विदाहकं विशेषेण सर्व्वदोषप्रकोपनम्॥

इति कौसुम्भतैलगुणाः।

सौवर्चलेङ्गुदीपिलुशिंशपासारसम्भवम्।
सरलागुरुदेवाह्वशङ्खिनीसम्भवन्तु यत्॥
तुम्बुरूत्थं करञ्जोत्थं ज्योतिष्मत्युद्भवं तथा।
स्वर्ग: कुष्ठक्रिमिश्लेष्मशुक्रमेदोऽनिलापहम्॥

करञ्जारिष्टके तिक्ते नात्युष्णेन विनिर्दिशेत्॥
कषायं मधुरं तिक्तं मारकं व्रणशोधनम्।
अक्षातिमुक्तकाक्षोड़नारिकेलमधूकजम्॥
त्रपुषैर्वारुकूष्माण्डश्लेष्मान्तकपियालजम्।
वातपित्तहृदयशोघ्नं श्लेष्मलं गुरु शीतलम्॥
पित्तश्लेष्मप्रशमनं श्रीपर्णीकिंशुकोद्भवम्।
फलोद्भवानि तैलानि यान्युक्तानि च कानिचित्॥
गुणकर्म च विज्ञाय फलवत्तानि निर्दिशेत्।
यावन्तः स्थावराः स्नेहाः समासेन प्रकीर्त्तिताः॥
सर्वे तैलगुणा ज्ञेयाः सर्वे चानिलनाशनाः।
सर्वेभ्यस्त्विह तैलेभ्यस्तिलतैलं प्रशस्यते॥

इति तैलवर्गः।

वसा मज्जा च वातघ्नौ बलपित्तकफप्रदा।
शौकरी माहिषोरम्भा वातला श्लेष्मवर्द्धिनी॥
सर्पनकुलगोधयालेपनं व्रणकुष्ठहा।
मत्स्य शशक मकरग्राहादीनां वसा हि या।
सा विसर्पहरा हृद्या कुष्ठरोगविनाशिनी॥

इति श्रीमहर्षिविरचिते हारीतोत्तरे नवमोऽध्यायः समाप्तः।

---

## दशमोऽध्यायः।

अथातोऽन्नविधिं व्याख्यास्यामः।

रक्तशालिर्महाशालिः कलमः षष्टिकोऽपरः।
खञ्जरीटापसाही च जीवकान्या कपिञ्जला॥
सौगन्धी सुफला चान्या विलवासो कचारका।
गरुड़ा रुक्मवन्ती च फलधान्या तथा परा॥

विल्लजा मागधी पीता एतेऽष्टादश शालयः।
रक्तशालि स्त्रिदोषघ्नश्चक्षुष्यो मूत्ररोगहृत् ॥
महाशालिर्गुरुर्वृष्यश्चक्षुष्यो बलवृद्धिदः।
शीतो गुरु स्त्रिदोषघ्नो मधुरो गौरषष्टिकः ॥
खञ्जरीटा त्रिदोषघ्नी पक्षाह्वो वातपित्तनुत्।
जीवका वातपित्तघ्नी कर्दमः श्लेष्मपित्तहा ॥
कपिञ्जला श्लेष्मला स्यात् सौगन्धी कफवातला।
विल्ववामी गुरुश्चापि पित्तघ्नी शुक्रवर्द्धिनी ॥
सुफला पित्तवातघ्नी क्षीरा पित्तनाशिनी।
गरुडोऽल्पातिशूकश्च पित्तमूत्रगदापहा ॥
कलमवल्ली लघु रुचिबलपुष्टिकरा मता।
फलधान्या लघुः पथ्या वातला श्लेष्मवर्द्धिनी ॥
विल्लजा मागधी पीता सामान्याम्ला गुणागुणैः।
रुचिकृत् बलकृन्मलदोषघ्नी च श्रमापहा ॥
शालयो दग्धकृज्जाताः कषाया लघुपाकिनः।
सुपथ्या बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षणाः ॥
केदारप्रभवा वृष्या बल्याः पित्तविनाशिनः।
रक्तमूत्रविकारघ्ना वातलाः कफकृन्मताः ॥
देशे विदेशे भिन्नानि नामानि परिलक्षयेत्।
समान् गुणैश्च सर्वांस्तान् भूमिभागोद्भवान् विदुः ॥
शालयश्छिन्नरूढा ये मूत्रला बद्धवर्चसः।
श्लेष्महा लघुपाकाश्च मूत्रला वातला हिमाः ॥

इति शालिवर्गः।

श्यामाकः कोद्रवः कङ्गुर्नीवारः कुरुविन्दकः।
क्षुद्रधान्यमिदं प्रोक्तं शृणु पुत्र! प्रवक्ष्यते ॥
श्यामाकः शोषणो रूक्षो वातलः कफवारणः।

कोद्रवो ग्राही रूक्षः स्याद्रक्तपित्तविशोधनः॥
नाधिकः कफहृत् प्रोक्तो रुच्यः स्वादुः प्रकीर्त्तितः॥
कङ्गुस्तु भग्नसन्धानवातकृद् बृंहणो गुरुः॥
रूक्षः श्लेष्महरोऽतीव वाजिनां गुणकृद् भृशम्।
नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत्॥

इति तृणधान्यगुणाः।

विदलान्नानि वक्ष्यामि शृणु पुत्र! यथाक्रमम्।
यवगोधूमचणका माषा मुद्गाढकी तथा॥
मुकुष्टकाः कुलत्थाश्च मसूरा स्त्रिपुटास्तथा।
निष्पावकाः कलायाद्या विदलान्नाः प्रकीर्त्तिताः॥
रूक्षः शीतो गुरुः स्वादुः कषायः शुक्रवर्द्धकः।
स्थैर्य्यकृत् पित्तकफहा कासश्वासहरो यवः॥

इति यवगुणाः।

मधुरो गुरुर्विष्टम्भी वृष्यो बल्योऽथ बृंहणः।
ईषत् कषायमधुरो गोधूमः स्यात् त्रिदोषहा॥

इति गोधूमगुणाः।

रक्ते कफे पीनसके तु कुष्ठे गुल्मामये वातरुजे प्रदिष्टः।
शीतः प्रतिश्यायकृमिं निहन्ति शुष्कास्तथार्द्रश्चणकः प्रशस्तः॥

इति चणकगुणाः।

स्निग्धोष्णवृष्यो मधुरश्च बल्यो माषश्च वातान्तकबृंहणश्च।
शुक्रप्रदः श्लेष्मकरो गुरुश्च सन्तर्पणः स्तन्यविवर्द्धनो हि॥

इति माषगुणाः।

शीतः कषायो मधुरो लघुः स्यात पैत्तास्रजित् दोषहरः सरश्च।
विपाकतोऽसौ कटुकप्रधानो मुद्गस्तथान्यात् कथितोऽभिरम्यः।

इति मुद्गगुणाः।

मृदुः कषाया च सरक्तपित्तं निहन्ति कासानतिवातला स्यात्।

ग्नज्वरारोचककासछर्दिहृद्रोगदुर्नामहराढकी स्यात् ॥

इति आढकीगुणाः।

क्तपित्तं कफवातहन्ता चोष्णः कषायो मधुरः प्रदिष्टः।
ही सुशीतो गुदकीलगुल्मं मुकुष्टकः सर्वगदान्निहन्ति ॥

इति मुकुष्टकगुणाः।

गञ्जयेन्मारुतपीनसानां कासप्रतिश्यायविबन्धगुल्मान्।
क्तं सरक्तान्तु बलासपित्तं निहन्ति मेदोऽपि कुलत्थकोऽयम् ॥

इति कुलत्थगुणाः।

तो विशोषी मधुरः प्रदिष्टः शूलार्त्तिगुल्मग्रहणीविकारम्।
रोति वातामयवर्द्धनञ्च पित्तासृजं ग्राहहरो मसूरः ॥

इति मसूरगुणाः।

तो विशोषी मधुरः प्रदिष्टो वायुं करोत्यस्थिगतं बलिष्ठम्।
न विबन्धभ्रमशोफकर्त्ता प्लीहाशहृद्रोगविकारकारी ॥

इति त्रिपुटगुणाः।

ष्पावको वै सबलासशोफ शुक्रान्तको रूक्षगुणो विदाही।
ायकः स्यान्मधुरो गुरुश्च स्तन्यास्रपित्तञ्च करोति वा[illegible] ॥

इति निष्पावकगुणाः।

ञ्चित्कषाया मधुराः प्रदिष्टा रक्तप्रशान्तिं जनयन्ति व[illegible]।
ञ्चित्सवातं विनिहन्ति पित्तं कलायका मुद्गसमानरूपाः ॥

इति कलायगुणाः।

लो विपाके मधुरो बलिष्ठः स्निग्धो व्रणालेपनपथ्य उक्तः।
ाऽग्निमेधाजननोऽल्पमूत्रस्त्वच्योऽतिकेश्योऽनिलहा गुरुश्च ॥
लेषु सर्वेष्वसितः प्रधानो मध्यः सितो हीनतरास्तथान्ये।
ते प्रदिष्टो बहुधान्यवर्गो ग्रन्थस्य विस्तारभयाच्च किञ्चित्।
ये प्रसिद्धाः सुतरां हि लोके तेषां गुणाः श्रेष्ठतमाः प्रदिष्टाः ॥

इति धान्यवर्गः।

अथातः शाकवर्गं व्याख्यास्यामः।

शाकं चतुर्विधं प्रोक्तं पत्रं पुष्पं फलं तथा।
कन्दश्चापि समुद्दिष्टं वक्ष्याम्येतान् पृथक् पृथक्॥
द्विविधं शाकमुद्दिष्टं गुरु विद्याद् यथोत्तरम्।
प्रायः सर्वाणि शाकानि विष्टम्भीनि गुरूणि च॥
रूक्षाणि बहुवर्च्चांसि सृष्टविण्मारुतानि च।
चक्षुष्या सर्वरोगघ्नी जीवन्ती मधुरा हिमा॥
स्वादुःपाके लघुः कफपित्तविषघ्नस्तण्डुलीयकः।
हन्ति वातं विड् विबन्ध मूत्रवातकफे हिता॥
मधुरं कफवातघ्नं पाचनं कण्ठशोधनम्।
विशेषतः पित्तहर इत्युक्तः कासमर्दकः॥
त्रिदोषशमनी वृष्या काकमाची रसायनी।
वास्तुकं मधुरं हृद्यं वातपित्तार्शसां हितम्॥
तद्वच्चिल्ली तु विज्ञेया वातपित्तविकारिणाम्।
केतकी वातला वृष्या तन्द्रानिद्राकरी मता॥
मेथिका वातशमनी रक्तपित्तापहा मता।
सार्षपं च त्रिदोषघ्नं रुचिदं चाग्निवर्द्धनम्॥
शतपुष्पा त्रिदोषघ्नी मेध्या पथ्या रुचिप्रदा।
ज्वरघ्ना सिंहिका प्रोक्ता अतीसारे प्रशस्यते॥
कुसुम्भं रुचिकृद्वातं हन्ति दृष्टिप्रसादनम्।
किञ्चित् पित्तकरं स्वादु विपाके च कफापहम्॥
किञ्चिच्चाम्लं भवेत् क्षारं प्रशस्तमग्निमान्द्यके।
भेदनं रूक्षमधुरं कषायमतिवातलम्॥
उष्णा कषायमधुरा चाङ्गेरी वह्निदीपनी।
वल्लादनी तथा फञ्जी तैलपर्णी तु सिंहिका॥
चक्रमर्दक इत्यन्ये दुर्ज्जरा वातकोपनाः।

पिण्डालुकं बला भिण्डी चिञ्चकान्या बलादनी ॥
एते श्लेष्मकराःशाकाः वातह्राग्निप्रशान्तकृत् ।
तथैव शतपत्नी च जयन्ती काकतिन्दुकः ॥
अटरूषक वेत्राग्र गुडूची निम्बपर्पटाः ।
किराततिक्तमहितास्तिक्ताः पित्तहरा मताः ॥
सर्वे शाका दृष्टिहरा वीर्य्यशुक्रौजोनाशनाः ।
वर्णापहारका ज्ञेया अतो यत्नाद् विवर्ज्जयेत् ॥

इति शाकवर्गः ।

अगस्तिकुसुमं शीतं चातुर्थकनिवारकम् ।
नक्तान्ध्यनाशनं तिक्तं कषायं कटुपाकि च ॥
पीनसश्लेष्मपित्तघ्नं वातघ्नं मुनिभिर्मतम् ।
शाल्मलेः पुष्पशाकन्तु प्रदरं नाशयेद् ध्रुवम् ॥
रसे पाके च मधुरं कषायं शीतलं गुरु ।
कफपित्तास्रजिद् ग्राहि वातलञ्च प्रकीर्त्तितम् ॥
कूष्माण्ड कालिङ्ग चिचिण्ड चिर्भट पटोलकर्कारुत्रपुष्पलावु ।
तुण्डीरकर्कोटककारवेल्लं कोशातकी वल्लिफलानि चैव ॥
वार्त्ताकुसिंहीबृहतीफलानि वदन्ति धीराः करहाटक स्यात् ।
एतैस्तु शाकैः रसवीर्य्ययुक्तमन्योन्यविज्ञातफलानि सम्यक्

कूष्माण्डं त्रिविधं ज्ञेय बालं मध्यं तथोत्तरम् ।
वातघ्नं रोचकं बालं मध्यमं स्यात् त्रिदोषहृत् ॥
पक्कं पित्तहरं शीतं दीपनं वस्तिशोधनम् ।
शोफं वातकफौ हन्ति रक्तपित्तनिवर्हणम् ॥

इति कूष्माण्डगुणाः ।

कालिङ्गं कफकृद्वातकारणं पित्तनाशनम् ।

इति कालिङ्गगुणाः ।

चिचिण्डो वातपित्तघ्नो बल्यः पथ्यो रुचिप्रदः ।

शोषणोऽतिहितः किञ्चिद्गुणैर्न्यूनः पटोलतः॥

इति चिचिण्डगुणाः।

चिर्भटो रूक्षमधुरस्त्रिदोषकारकः स्मृतः।
अपक्वो वातकफकृत् पक्वः किञ्चिद्विशिष्यते॥

इति चिर्भटगुणाः।

पटोलपत्रं विनिहन्ति पित्तं नालं कफघ्नं प्रवदन्ति धीराः।
फलञ्च तस्य त्रिकदोषशान्तिं करोति नूनं ज्वरिणो हितं स्यात्॥

इति पटोलगुणाः।

एर्वारुकं स्वादु शीतं सक्षारं कफवातकृत्।
नातिपित्तकरं रुच्यं दीपनं दाहनाशनम्॥

इति एर्वारुकगुणाः।

त्रपुषं गुरु विष्टम्भि कफकृत् स्वादु शीतलम्।

इति त्रपुषगुणाः।

वर्च्चोभेदिन्यलावु हि रूक्षा गुर्व्यतिशीतला।

इति अलाबुगुणाः।

तुण्डिका चाग्निरुचिकृद् वातपित्तनिवारणी।
त्रिदोषघ्नं कर्कटकं रुचिकृन्मधुरं तथा॥

इति तुण्डिकाकर्कटयोर्गुणाः।

कारवेल्लं वातलञ्च कफघ्नं पित्तनाशनम।
उष्णं रुचिकरं प्रोक्तं रक्तदोषहरं नृणाम्॥

इति कारवेल्लगुणाः।

कोशातकी फलं स्वादु मधुरं वातपित्तनुत्।
विपाके च कफं हन्ति ज्वरे शस्तं प्रदिश्यते॥

इति कोशातकीगुणाः।

इति वल्लिफलशाकानि।

निद्राकरं प्रीतिकरं तथैव सवातलं श्वासविमर्दनं हि।

तासकासारुचिनाशनञ्च न वृन्ताकं पित्तकरं फलं स्यात् ॥

इति वृन्ताकगुणाः।

शा वृहतीफलमेव शस्तं सन्दीपनं स्यात् कफवातनाशनम्।
ण्डुविसर्पज्वरकामलादौ तथारुचौ शस्तमिदं वदन्ति ॥

इति फलशाकगुणाः।

कन्दशाकान् प्रवक्ष्यामि शृणु पुत्र! पृथक् पृथक्।
शूरणं पिण्ड पिण्डालु पलाण्डु गृञ्जनं तथा ॥
ताम्बूलपर्णकन्दः स्याद्धस्तिकन्दस्तथापरः।
वराहकन्दमप्यन्यं कन्दशाका इमे स्मृताः ॥
दीपनः शूरणो रुच्यः कफघ्नो विशदो लघुः।
विशेषादर्शसां पथ्यः प्लीहगुल्मविनाशनम्।
अम्लिकायाः स्मृतं कन्द ग्रहण्यर्शोहितं लघु ॥
पिण्डको वातलो श्लेष्मो ग्राही वृष्यो महागुरुः।
पिण्डालुकः श्लेष्मकरः शुक्रवृद्धिकरो मृदुः॥
पलाण्डुर्वातकफहा शुक्रलः शूलगुल्मनुत्।
ताम्बूलपर्णकन्दः स्याच्छुक्रलो विशदो लघुः ॥
हस्तिकन्दो गुरुर्ग्राही शुक्रवृद्धिप्रदो मतः।
वराहकन्दश्चार्शोघ्नो वातगुल्मनिवारणः ॥
अन्ये ते ज्ञातकन्दाश्च तेन प्रोक्ता मयानघ ॥
सर्वेषां कन्दशाकानां शूरणः श्रेष्ठ उच्यते।
दीपनोऽर्शः शूलगुल्मकृमिप्लीहविनाशनः ॥
दद्रूणां रक्तपित्तानां कुष्ठिनां न प्रशस्यते।
एते कन्दाः समाख्याताः श्रीमन्तो हि भिषग्वर! ॥

इति कन्दशाकवर्गः।

आम्रं जम्बूश्च कोलञ्च दाड़िमामलकन्तथा।
खर्जूरञ्च परुषञ्च मातलुङ्गं पियालजम् ॥

नागरङ्गाम्लिका चैव द्राक्षा च करमर्दकम्।
चौरिका मधुरा चैते फलवर्गे प्रकीर्त्तिताः॥
अपक्कमाम्रं फलमेव शस्तं संग्राहि पित्तासृजि कोपनञ्च।
तथा विपक्कं मधुरन्तु चाल्पं भेद्यं सपित्तामयनाशनञ्च॥
जम्बुर्ग्राही मधुरकफहा रोचनो.वातहारी
कोलं चाम्लं मधुरमथवा श्लेष्मलं ग्राहि शस्तम्।
श्रेष्ठं वातादिकरुजहरं दाडिमञ्चामरघ्नं
तद्वत्प्रोक्तं मधुरमपि तं स्वादु राजादनञ्च॥
परूषकैटर्य्यकपीलुकानां पियालसिंहीकरमर्दकानाम्।
फलानि चैतानि निहन्ति पित्तं हन्याच्च सर्वातुरसन्निवातम्॥
स्यान्मातुलुङ्गः कफवातहन्ता हन्ता क्रमीणां जठरामयघ्नः।
सदोषरक्तादिविकारपित्तसन्दीपनः शूलविकारहारी॥
श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनम्।
दीपनं लघु रुच्यञ्च मातुलुङ्गमुदाहृतम्॥
त्वक्तिक्ता दुर्जराति स्यात् क्रमिवातकफापहा।
स्वादुः शीता गुरुः स्निग्धा त्वङ्मांसं वातपित्तजित्॥
मध्यं शूलानिलच्छर्दिकफारोचकनाशनम्।
दीपनं लघु सग्राहि गुल्मार्शोघ्नन्तु केशरम्॥
हृद्यं वर्णकरं रुच्यं रक्तमांसवलप्रदम्।
शूलाजीर्णादिरोगेषु मन्दाग्नौ कफमारुते॥
अरुचिश्वासकासेषु स्वरसाऽस्योपदिश्यते।
रसोऽतिमधुरो हृद्यो वीर्य्यपित्तानिलापहा॥
कफकृद् जरः पाके मातुलुङ्गस्य कल्कक:।
तिक्तं गुष्मन्तु वीजञ्च गुल्मनुत् स्यात्तथापरम्॥

इति बीजपूरगुणा

निम्बुकं क्रमिसमूहनाशनं तीक्ष्णमुष्णमुदरग्रहापहम्।

तपित्तकफशूलिनां हितं कष्टनष्टरुचिरोचनं परम् ॥
दोषमद्योज्वरपीडितानां दोषाश्रितानां विषविह्वलानाम्।
तग्रहे बद्धगुदे हितञ्च विसूचिकायां मुनयो वदन्ति ॥

इति निम्बकगुणाः।

रङ्कं स्वादुगुणोपपन्नं सन्दीपनं रोचकमर्शसाञ्च।
दोषहृच्छूलकृमीन्निहन्ति मन्दाग्निकामश्वसनापहारि ॥
लीफलञ्चाम्लमपक्वशीलं तदस्रपित्तामकरं विदाहि।
तामये शूलगदे प्रशस्तं पक्वं तथा शीतगुणोपपन्नम् ॥

इति आम्लिकाफलगुणाः।

द्राक्षाफलं मधुरमम्लकषाययुक्तं
त्वारेण पित्तमरुतां कफहारि शीघ्रम्।
श्रेष्ठं निहन्ति रुधिरामयदाहशोष-
मूर्च्छाज्वरश्वसनकासविनाशकारि ॥
कषायघ्ना विपाके च द्राक्षा चैव कफे हिता ॥

इति द्राक्षागुणाः।

नारिकेलं सुमधुरं गुरु स्निग्धञ्च शीतलम्।
हृद्यं सबृंहणं वस्तिशोधनं रक्तपित्तनुत् ॥
विष्टम्भि पक्वं मतिमन्! अपक्वं कफवातलम्।
बृंहणं शीतलं वृष्यं नारिकेलफलं विदुः ॥

इति नारिकेलगुणाः।

हृद्यं मनोज्ञं कफवृद्धिकारि शीतञ्च सन्तर्पणमेव बल्यम्।
रक्तं सपित्तं श्वसनञ्च दाहं रम्भाफलं हन्ति सदा नरस्य ॥
अपक्वकं ग्राहि च शीतलञ्च कषायकं वातकफं करोति।
विष्टम्भि बल्यं गुरु दुर्जरञ्च आरण्यरम्भाफलमेव तद्वत् ॥

इति कदलीफलद्वयगुणाः।

कपित्थमम्लमधुरं कषायं विशदं गुरु।

हृद्रोगकासातिसारछर्दिश्लेष्मामयापहम् ॥

इति कपित्थगुणाः ।

अपक्वं खर्जूरफलं त्रिदोषशमनं मतम् ।
पक्वमेव हितं श्रेष्ठं त्रिदोषशमनं परम् ॥

इति खर्जूरगुणाः ।

कषायं मधुरं भेदि पूगं पित्तकफापहम् ।

इति पूगफलगुणाः ।

नागवल्लीदलं हृद्यं सुगन्धि कफवातजित् ।

इति ताम्बूलगुणाः ।

खदिरः कफपित्तघ्नः कषायः कुष्ठनिबर्हणः ।
चूर्णन्तु पित्तकृत्तीक्ष्णं ताम्बूलं कफवातजित् ॥
संयोगात् सुरसं स्वादु मुखवैरस्यनाशनम् ।
दन्तस्थैर्यकरं शोषपीनसश्वासरोगहृत् ॥
रागपाटववाक्शुद्धिस्वरकान्तिकरं मतम् ।
कषायं कन्नामुखस्राव फल कर्पूर संयुतम् ॥

इति सखदिरताम्बूलगुणाः ।

इति फलवर्गः ।

इति श्रीमदात्रेयभाषिते हारीतोत्तरे दशमोऽध्यायः ।

---

## एकादशोऽध्यायः ।

आत्रेय उवाच ।

अथ वक्ष्यामि माक्षिकं त्रिविधं शृणु पुत्रक ! ।
भ्रामरं सारघं क्षौद्रं तेषां वक्ष्मि गुणागुणम् ॥
शीतं कषायं मधुरं लघु स्यात् सन्दीपनं लेखनमेव शस्तम् ।
संशोधनञ्च व्रणशोधनञ्च संरोपणं हृद्यतमञ्च बल्यम् ॥
त्रिदोषनाशं कुरुते च पुष्टिं कासक्षये वा क्षतजे च छर्द्दौ ।

हिक्काभ्रमे शोषगणपीनसानां रक्तप्रमेहे च तथातिसारे ॥
रक्तातिसारे च सरक्तपित्ते तृण्मोहहृत्पार्श्वगदेऽपि शस्तम् ।
नेत्रामये वा ग्रहणीगदे वा विषे प्रशस्तं भ्रमरैश्चितं यत् ॥

भ्रामरं मघनं जाड्यं भूयिष्ठं मधुरञ्च यत् ।
रूक्षं विशेषतो ज्ञेयं शीतलं लघु लेखनम् ॥

इति भ्रामरमधुगुणाः ।

तस्माल्लघुतरं रूक्षं सारघं नातिशीतलम् ।
श्वासकासक्षये श्रेष्ठं कामलार्शोविनाशनम् ॥

इति सारघमधुगुणाः

क्षौद्रं शीतं लघु रूक्षं दीपनं बलकृन्मतम् ।
अतिसारे नेत्ररोगे क्षते वा क्षतसंहितम् ॥

इति क्षौद्रमधुगुणाः ।

भ्रामरं वृक्षसंस्थाने विटपे सारघं भवेत् ।
रन्ध्रे तु कोटरे वापि क्षौद्रं तत्र प्रशस्यते ॥

इति मधुवर्गः ।

अथ सुरावर्गो व्याख्यास्यते ।

गौडी माध्वी तथा पैष्टी निर्यासा कथिता परा ।
इति चतुर्विधा ज्ञेया सुरास्तासां प्रभेदकाः ॥
भेदेन द्वादशाः प्रोक्ताः सुरासौवीरकासवैः ।
सीधु गौड़ी च मत्स्यण्डी गुड़ेन प्रभवास्त्रयः ॥
माध्वीकं मधुकं माध्वं मधुना संयुता सुरा ।
पैष्टीसौवीरकारिष्टास्तण्डुलप्रभवास्त्रयः ॥
खर्ज्जूरीकारसम्भूता ताड़मण्डोरसोद्भवा ।
निर्यासा सा तु विज्ञेया तासां वच्मि गुणागुणम् ॥
सीधुः कषायाम्लकमाधुरो वा सन्दीपनो भेदमलापहा च ।

आमातिसारानिलपित्तशूलश्लेष्मामयार्शोग्रहणीगदघ्नः ॥

इति सीधुगुणाः।

गौड़ी कषाया मधुराम्लशीता सन्दीपनी शूलरुजापहन्त्री।
हृद्या त्रिदोषं शमयत्यजीर्णं पाण्डामयार्शःश्वसनं निहन्ति ॥

इति गौडीगुणाः।

हरति मलसमूहं दीपनी पाण्डु मेहान्
लघु मधुर सुशीता रोचनी पित्तहन्त्री।
जरयति सकलं वा पीतमल्पातिमात्रं
श्वसनरुधिरकाशान् हन्ति वा कामलाञ्च ॥

इति शार्करगुणाः।

माध्वीकं शीतलं चाम्लं मधुरमपि तथा कषायोष्णकञ्च
हन्यात्पित्तामयार्शः श्वसनमपि तथा चातिसारं प्रमेहान्।
शूलानाहोपमर्दं जरयति सकलं दीपयत्यग्निमान्द्यं
तस्माद्वातामवातं वमनमपि तथा हन्ति सर्वांश्च रोगान् ॥

इति माध्वीकगुणाः

कषाया मधुरा चाम्ला सुरा सन्दीपनी मता।
कार्श्यार्शोग्रहणीदोषमूत्राघातविनाशिनी ॥

इति सुरागुणा

पैष्टी सन्दीपनी रुच्या कफकृद् वातनाशिनी।
पित्तला पाण्डुरोगाणां कारिणी बहुधा मता ॥

इति पैष्टीगुणाः

वातपित्तकरा रूक्षा कषाया विशदा गुरुः।
श्लेष्मला भेदनी ग्राही मूत्रकृच्छ्रशिरोऽर्त्तिकृत् ॥

इति मधूकखर्जूरसुरागुणाः

श्लेष्मदोषकरा हृद्या वातला श्लेष्मवर्द्धिनी।

क्षतशक्तिनाशविध्वंसकारिणी ताड़मण्डिका ॥

इति ताडमण्डीगणः।

पूर्णे कषायपित्ते च योगयुक्ता सुरा हिता।
बहुदोषकरा चैव श्लेष्मरोगे विशेषतः॥
श्रमज्वरातुरे शोषे शोफे पाण्डामये क्षये।
मतिः क्रमेत्वपस्मारे पथ्यक्षीणे श्रमेषु च॥
श्रान्ते वा विषपीते वा सर्पदष्टे जलोदरे।
रक्तपित्ते तथा श्वासे वारुणी न हिता मता॥

इति मद्यवर्गः।

आत्रेय उवाच।

भूरिणः शृङ्गिणश्चैव नखिनोऽन्ये प्रकीर्त्तिताः।
श्वापदाः पक्षिणश्चान्ये मत्स्याश्चान्ये सरीसृपाः॥
जलेचरा जलाधारा ग्रामारण्यनिवासिनः।
आनूपा जाङ्गला जीवास्तथा साधारणोऽपरः॥
मृगा रुरुकपिलाङ्गास्तथा गवयसाहिपाः।
शूकराद्या विवर्णास्ते शृङ्गिणो ग्रामवासिनः॥
गण्डारवनगजाद्याः शृङ्गिणोऽरण्यवासिनः।
शूकरर्क्षकराद्या ये भूरिणो वा भवन्त्यमी॥
शशकशल्लकी गोधा मार्जाराद्या नखायुधाः।
सर्पमत्स्यादिका ये च ते विज्ञेयाः सरीसृपाः॥
मत्स्यकुम्भीरकाद्या ये कच्छपा दर्दुरादयः।
हंससारसचक्राद्या कुमुदाश्च कपिञ्जलाः॥
आनूपास्तेषु विज्ञेयाः श्लेष्मला वातकोपनाः।
शशलावकवार्त्ताका गोधाहरिणकुक्कुटाः॥
छिक्कराद्यास्तथान्येऽपि तित्तिराद्याश्च कुर्चकाः।
भारद्वाजास्तथा श्येना मूषका वरवारणाः॥

इत्येते जाङ्गला जीवा ये जलेन विना स्थिताः ।
शूकरा मृगशल्लाद्याः सलिलाशयमाश्रिताः ॥
मकराद्याश्च गण्डारा गवया मेषबर्व्वराः ।
महिषाद्याश्च ये चैव ते च साधारणा मताः ॥
कुररवमकराः कङ्कचटकप्रिकभृङ्गसारसाः ।
आडिदात्यूहहंसा जलकरटिकापिङ्गाष्टिट्टिभाद्याः ॥
जलेचरा विहङ्गास्ते भासकाः खञ्जरीटकाः ।
इत्येते जलजा जीवाः स्थलजाः स्थलचारिणः ॥
उष्ट्रा गजा वाजिनश्च माहिषाः सौरभाजकाः ।
खरशूकरमेषाश्च श्वाना मार्ज्जारमूषकाः ॥
इत्येते पशवो ज्ञेया ग्रामवासनिवासिनः ।
कुक्कुटाः कलविङ्काश्च पारावतकपोतकाः ।
पक्षिणो ग्रामचाराश्च वच्मि चैषां गुणागुणम् ।
शृङ्गिणां हरिणः श्रेष्ठो बल्यो रोचनदीपनः ॥
त्रिदोषघ्नो लघुः पाके मधुरो ज्वरिणां हितः ।

इति हरिणमांसगुणाः ।

क्षते क्षयार्शसोः पाण्डावरोचकनिपीडिते ।
कासश्वासातुराणाञ्च एणमांसं सुखावहम् ॥

इति एणमांसगुणाः ।

चित्राङ्गो वातशमनो बृंहणो बलकृन्मतः ।
श्लेष्मलः कथितो वापि दुर्जरो मेदवर्द्धनः ॥

इति चित्राङ्गगुणाः ।

छिक्करो लघु बृंहो च मधुरो दीपनाशनः ।
तुल्यो हरिणमांसस्य ज्वरे वापि प्रशस्यते ॥

इति छिक्करगुणाः ।

रोहितो बृंहणश्चैव विबन्धी दुर्जरो घनः ।

ज्वरिणां विषमाग्नीनामतिसारे न शस्यते ॥

इति रोहितगुणाः।

तथैव गण्डगवयमहिषोष्ट्रतुरङ्गकाः।
विबन्धिगुरवः स्निग्धा वातलाश्च प्रकीर्त्तिताः ॥

इति गण्डगवयमहिषोष्ट्रतुरङ्गगुणाः।

वातघ्नं रोचनं वृष्यं दुर्जरं श्रमनाशनम्।
वातलं पित्तशमनं रुचिदं धातुवर्द्धनम् ॥

इति शूकरमांसगुणाः।

शशको जाङ्गलश्रेष्ठो लघुर्वृष्यश्च दीपनः।
रुचिकृत्तर्पणो बल्यस्त्रिदोषशमनो मतः ॥
ज्वरे च पाण्डुरोगे च क्षये कासे गुदामये।
राजयक्ष्मणि पाण्डौ च तथातीसारिणां हितः ॥

इति शशकमांसगुणाः।

शल्लको वृंहणो बल्यः स्निग्धो वृष्यो रुचिप्रदः।
वातश्लेष्महरो हृद्यो मधुरो धातुवर्द्धनः ॥

इति शल्लकमांसगुणाः।

रक्तपित्तहरा वृष्या स्निग्धा मधुरशीतला।
श्वासकासहरा प्रोक्ता गोधा चार्शोहिता बला ॥

इति गोधामांसगुणाः।

स्निग्धो बलकरः शुक्रवर्द्धनो मधुरो लघुः।
दुर्नामशुक्रमिदोषघ्नो वातहारी च मूषकः ॥

इति मूषकमांसगुणाः। इति चतुष्पदानां मांसगुणाः।

अथातः पक्षिमांसानि व्याख्यास्यन्ते।
पक्षिणाञ्च महाश्रेष्ठो लावको जाङ्गलात्मकः ॥
संग्राही दीपनः प्रोक्तः कषायो मधुरो लघुः।

तथा विपाके मधुरः सन्निपातेऽतिपूजितः॥

इति लावकमांसगुणाः

तथैव तित्तिरो वृष्यो मेधाग्निबलवर्द्धनः।
सर्वदोषहरो बल्यो बलाकासमता गुणैः॥
कृष्णगौरप्रभेदाश्च श्रेष्ठो गौरश्च तित्तिरः।
तृतीय तित्तिरोऽन्योऽपि सामान्यो गुणलक्षणैः॥
सवातलोऽतिबलकृद्धनः किञ्चिद्रसायनः॥

इति तित्तिरगुणाः

वार्त्ताको विशदो वृष्यो यथा लावास्तथैव च।
मेधावृद्धिं सौतमाञ्च करोत्युत्पाटनं शिखी।
सवातलोऽतिबलकृद्धनः किञ्चिद्रसायनः॥

इति वालमयूरगुणाः

सुस्निग्धो श्यामलो वृष्यो रसः शुक्रविवर्द्धनः।
मांसवृद्धिकरो बल्यो द्वितीयश्च मयूरकः॥

इति द्वितीयमयूरगुणाः

तथैव कुक्कुटो ज्ञेयो मधुरश्च गुणात्मकः।

इति कुक्कुटगुणाः

कपोतो वृष्यो बल्यो वातपित्तविनाशनः।
तरुणः शुक्रजननो हितो नृणां रुचिप्रदः॥

इति कपोतगुणाः

तथा पारावतो ज्ञेयो वातघ्नः सकरो गुरुः।
बल्यो वृष्यो रुचिकरस्तथा हारीतको मतः॥
पोतकी भङ्गिका क्षुद्रा तथाच कुनटी स्मृता।
एते तुल्यगुणा ज्ञेया लघुवातापहारिणः॥
लघुश्च शूकरो ज्ञेयः कायाग्निवर्द्धनो भृशम्।
तथा लघुर्वातहरः काष्ठकुट्टोऽग्निवर्द्धनः॥

वातश्लेष्माधिको ज्ञेयः शीतलः शुक्रवर्द्धनः।
अश्मरीं हन्ति विशदो बलकृन्मांसलक्षणः।
चकोरः शुकशारी च समदोषा गुणागुणैः॥

इति चकोरशुकसारिगुणाः।

क्रौञ्चो वृष्योऽतिरुचिकृदश्मरीं हन्ति नित्यशः।
शोषमूर्च्छाहरो दीप्यो हन्ति काममरोचकम्॥

इति क्रौञ्चगुणाः।

कोकिलः श्लेष्मलो ज्ञेयः पित्तसंशमनो मतः।

इति कोकिलगुणाः।

पापीहक स्त्रिदोषघ्नो बल्यः शुक्रविवर्द्धनः॥

इति पापीहकगुणाः।

गृहचटकोऽतिवृष्यो बलशुक्रविवर्द्धनः।
सर्वदोषहरश्चापि दीपनो मांसवर्द्धनः॥

इति गृहचटकमांसगुणाः।

इति स्थलचराणाञ्च मांसवर्गः प्रकाशितः।
अथातो जलचराणां मांसवर्गं प्रवक्ष्यते॥
हंसः श्लेष्मकरो बलातिरुचिकृद् वृष्यो गुरुः शीतल-
श्चक्राह्वोऽतिकषायशुक्रजननो वृष्योऽतिरुच्यो मृदुः।
ज्ञेयः सारसकः कफानिलहरो वृष्यो गुरुश्चोच्यते
रूक्षो वीर्य्यविवर्द्धनः कफहरः कङ्कस्तथा भासकः॥
आड़ो वातविकारकासहननो बल्या तथा दीपनी
क्रौञ्ची वा गरशुक्रदोषहननस्तुल्यस्तथा कर्कटः॥
दात्यूहो मरुतस्य नाशनकरो वृष्योऽतिशुक्रप्रदः
श्रेष्ठः सर्वगुणः श्रमोपशमनः शुक्रप्रदो वातहा।
चतुष्पादेषु लघ्वी स्त्री विहगेषु लघुः पुमान्।

पूर्वार्द्धन्तु लघु स्त्रीणां पुंसां परार्द्धमादिशेत् ॥
देहमध्यं गुरुप्रायं सर्वेषां प्राणिनां मतम्।
गुरूरुखण्डानि सर्वेषां गुर्वी ग्रीवा च पक्षिणाम ॥

इति जलपक्षिमांसगुणाः।

मत्स्यानां मकरः श्रेष्ठो दीपनो वातनाशनः।
रुचिप्रदः शुक्रकरो ग्राही चोष्णविकारहा।
मूत्राश्मरीणां शमनो गुल्मातिसारनाशनः ॥

इति मकरगुणाः।

शृङ्गी वातविनाशनो रुचिकरो वृष्यः कफघ्नो मतः।
वातघ्नो नहि पित्तकृत् बलकरः स्याद्रोहितः सर्वदा ॥
श्लेष्माकरो तु शफरी नलमीनः कफात्मकः।
शकुली च विशाला च ज्ञेयौ वातकफात्मकौ ॥
विलं विमत्स्यं ज्ञेयञ्च वातपित्तकफाकरम।

इति मत्स्यमांसगुणाः।

कच्छपो मधुरः स्वादुः शुक्रवृद्धिकरो मतः।
वातश्लेष्मकरो वल्यो वृंहणो रूक्ष एव च ॥

इति कच्छपगुणाः।

कुलीरोऽतिबल्यो वृष्यः पाण्डुक्षयविनाशनः।
शोषातिसारग्रहणीस्थविराणां स्त्रियां हितः ॥

इति कुलीरगुणाः।

काकःकोकिल-शूकरास्त्वथ खरोष्ट्राश्वादयो भल्लुकाः।
व्यालाः सौरभयो वृकप्रभृतयो ये चान्यजीवा नृणाम् ॥
मण्डूकाश्च सरीसृपादिकगणा यूकाः कलिङ्गाश्च ये।
कोकः सारसशारिका शुक इमे भक्ष्या न शस्तास्तथा ॥
गृहचटकचकोराः काकजात्याश्च श्येनाः
पिक शुक-विषशृङ्गीभृङ्गदात्यूहकङ्काः।

जलकरटकपोता पोतकी-खञ्जरीटाः
कलविङ्कमशकाद्या यूकपिङ्गादयोऽन्ये ॥
एते भक्ष्या नैव भक्ष्या न चेष्टा
ये चाप्यन्येऽज्ञातनामाण्डजाश्च ।
अन्येचापि श्वापदा ये च निन्द्या-
स्ते चाखाद्या वर्जिताश्चात्र सर्वे ॥

इति मांसवर्गः

इति श्रीमदात्रेयभाषिते हारीतोत्तरे एकादशोऽध्यायः

---

## द्वादशोऽध्यायः ।

अथातो भोजनवर्गं व्याख्यास्यामः

भक्तः परिस्रवो भक्तस्तर्पणो वातनाशनः ।
सूक्ष्मश्च समीरघ्नो रुचिकृन्मूत्रलो मतः ॥
आशुमण्डो भवेद्ग्राही मधुरो वा कफात्मकः ।
तर्पणः क्षयदोषघ्नः शुक्रवृद्धिकरः परः ॥
प्रस्राविता भक्ता युगन्धराणां भक्तश्च घनो विशदमाधुरश्च ।
कफत्रिदोषनाशनश्च कथ्यते कासश्च श्वासात्मकः एव स स्मृतः ॥

इति युगन्धरभक्तगुणाः ।

दीपनी स्वेदकरा यवागूः सम्पाचनी दोषमलामयानाम् ।
तर्पणी धातुबलेन्द्रियाणां शस्ता भवेत् स्याज्ज्वररोगिणाञ्च ॥
भागैकश्च भवेत्तत्र द्विभागेन जलं क्षिपेत् ।
चित्रकं पिप्पलीमूलं पिप्पलीचव्यनागरम् ॥
धान्यकस्य समांशानि पिष्ट्वा श्वेतांश्च तण्डुलान् ।
संशुद्धा शिथिला किञ्चित् सा यवागूर्निगद्यते ॥
यवागूमुपभुञ्जानो जनो नारुचिमाचरेत् ।

शाकमांसफलैर्युक्ता यवागूः स्याच्च दुर्जरा ॥

इति यवागूगुणाः।

पञ्चकोलकधानाकैस्तथा रास्नान्वितः पुनः।
मण्डस्त्रिदोषशमनो ज्वराणां पाचनः परः ॥

इति मण्डगुणाः।

पायसं गुरु विष्टम्भजननं श्लेष्मवातलम्।
पित्तसंशमनं बल्यं वृष्यं श्रेष्ठं रसायनम् ॥

इति पायसगुणाः।

गुरुर्विष्टम्भजननी वातश्लेष्मकरी स्मृता।
पित्तसंशमनी बल्या वृष्या चैव बलप्रदा ॥
मुद्गतण्डुलसंयुक्ता माषतण्डुलकैः पुनः।
अन्यथा धान्यगुणवान् वक्ष्यते च भिषग्वर ॥
तिलानां मयुता हृद्या धातुपुष्टिविवर्द्धिनी।
गुरुर्विष्टम्भमलकृद् जरा श्लेष्मप्रकोपनी ॥

इति कृशरागुणाः

सूपश्चोक्तस्त्रिदोषघ्नो रञ्जितश्चैव सर्पिषा।
धातुवृद्धिकरः श्रेष्ठो बृंहणो बलवर्द्धनः ॥

इति सूपगुणाः

वातश्लेष्मकरो हृद्यो खलको बलकारकः ॥

इति खलगुणाः

कफानिलहरो हृद्यो दीपनो दाड़िमाम्लकः।

इति दाडिमाम्लकगुणाः

पर्पटस्तैलसंभृष्टो दोषहा च ज्वरापहः।
रुचिकृत् बलकृच्चैव दाहशोषतृषापहः ॥

इति पर्पटगुणाः

शिखण्डाकी च गुरुः स्निग्धा दुर्जरा चैव शीतला।

पित्तश्लेष्मकरा वल्या धातूनाञ्च बलप्रदा ॥

इति शिखाकीगुणाः।

दुर्जरा मधुरा रूच्या वटिका माषकादिभिः ॥

इति वटिकागुणाः।

गुड़ेन दधिसंयुक्ता हिता शिखरिणी नृणाम्।
धातुवृद्धिकरा हृष्या वातपित्तविनाशिनी ॥

इति शिखरिणीगुणाः।

शीतलः पित्तशमनो भ्रममूर्च्छातृषापहः।
खण्डेन संयुतः श्रेष्ठो घृतजुष्टो जलाधिकः ॥

इति सौगुणाः

शक्तवः सर्पिषाभ्यक्ताः शीतवारिपरिप्लुताः।
नातिद्रवा नातिसान्द्रा मन्थ इत्यभिधीयते ॥
मन्थः सद्यो बलच्छर्दिपिपासादाहनाशनः।
साम्लः स्नेहश्च सगुडो मूत्रकृच्छ्रस्य साधनः ॥

इति मन्थगुणाः।

सिद्धं मांसं वेशवारेण युक्तं बल्यं श्रेष्ठं स्वादु सन्दीपनञ्च।
शीतं शुद्धं दोषराशीन्निहन्ति स्नेहैर्युक्तं दीपनं दुर्जरञ्च ॥
नहि मांससमं किञ्चिदन्यद्देहमहत्त्वकृत्।
मांसादमांसं मांसेन संभृतत्वात् विशिष्यते ॥

इति मांसगुणाः।

अङ्गारैः परिपक्वञ्च वार्त्ताकं दीपनं लघु।
बल्यञ्च स्नेहसंयुक्तं घनं घनगुणात्मकम् ॥

इति भर्त्तागुणाः।

अङ्गारमण्डको हृद्यो दीप्योऽरोचकदोषहा।
त्रिदोषघ्नोऽथवा ग्राही ज्वरिणां शस्यते हि तत् ॥

इति अङ्गारमण्डगुणाः।

अत्युष्णं मण्डकं पथ्यं लघु चैव यथोत्तरम् ।
त्रिकशूलं पार्श्वशूलं परिणामं तथैव च ।
तृष्णामारुतछर्दिघ्न-मामाशयकरं तथा ॥

इति अत्युष्णमण्डगुणाः

लप्सकर्परपक्वा या रोचनी मधुरा घना ।
कफवृद्धिकरी बल्या पित्तरक्तप्रदायिनी ॥
पूरिकाघृतपूरन्तु त्रिदोषशमनं परम् ।
वृष्यं संबृंहणं स्वादु क्षतक्षयनिवारणम् ॥

इति पूरिकागुणाः

गुरुश्चो दुर्जरो ज्ञेयो वातश्लेष्मकरो गुरुः ।
पूपका श्लेष्मका हृद्या वृष्या वातानुलोमनः ॥

इति पूपकगुणाः

सोमालिका घना स्वादु रोचनी बलवर्द्धनी ।
दुर्जरा दोषशमनी वृष्यानुकरणी मता ॥

इति सोमालिकागुणाः

बृंहणी वातपित्तघ्नी पथ्या लघुतरा मता ।
फेणिका रोचनी बल्या सर्वधातुबलप्रदा ॥

इति फेणीगुणाः

विष्टम्भी मधुरो हृद्यो घनो वातकफात्मकः ।
समितो वा त्रिदोषघ्नो दुर्जरो जायते पुनः ॥

इति भिन्नवटकगुणाः

अभिन्नो दुर्जरो बल्यो घनतृष्णाप्रदः स्मृतः ।
तीक्ष्णा विपाके विष्टम्भी दुर्जरो जायते पुनः ॥

इति अभिन्नवटकगुणाः

कटुकास्तर्पणा बल्या दुर्जराः शोषकारकाः ।

मन्दाग्नौ न प्रशस्यन्ते मोदका बहुवर्णकाः।
द्रव्यं गुणविशेषेण रसास्वादेन वा पुनः॥

इति मोदकगुणाः।

पोलिका कथिता वल्या कफदोषकरी मता।
त्रुष्या वीर्य्यप्रदा ज्ञेया दोषघ्ना वीर्य्यवर्द्धनी॥

इति यवपोलिकागुणाः।

विदला तु माषपर्णी सिद्धा खर्परकेण तु।
कृत्वा वान्नविशेषेण दोषान् सर्वान् विभावयेत्॥
अन्यानि चान्नपानानि नैवोक्तानि महामते!।
ग्रन्थिभिस्तैरभीकस्य लोको नोवाच न क्षमः॥

इति अन्नवर्गः।

असात्म्ये भोजनं यस्तु पानं वा कुरुते नरः।
ज्वरः संजायते तस्य छर्दिर्वा तत्क्षणाद्भवेत्॥
कृत्वा तु भोजनं सद्यो व्यायामं सुरतं तथा।
यः करोति विपत्तिः स्यात्तस्य गात्रस्य निश्चितम्॥
न चातिशीतं भुञ्जीत नात्युष्णं भोजने हितम्।
कुर्य्याद्वातकफं शीतमुष्णं भवति मारकम्॥
न श्रान्तो भोजनं कुर्य्यात् न व्यायामसमाकुलः।
विषमस्थो न भुञ्जीत करोति विविधान् गदान्॥
आदौ फलानि भुञ्जीत वर्जयित्वा तु कर्कटीम्।
न नक्तं दधि भुञ्जीत भोजनार्द्धेन धारणम्॥
भुक्तोपविशतः स्थौल्यं बलमुत्तानशायिनः।
आयुर्वामकटिस्थस्य मृत्युर्धावति धावतः॥
न वादौ सलिलं पेयं भोजने पानमाचरेत्।
अर्द्धाहारेण भुञ्जीत तृतीयं व्यञ्जनेन तु॥
चतुर्थं तोयपानेन पूर्णाहारः सुजायते।

भोजनोर्द्धञ्च क्रमते शतपादं शनैः शनैः ॥
पश्चादुत्तानशयनं ततो वामे च्चणं शयेत्।
भुक्तोपरि समाचम्य मार्जयेद्दचिणो करैः ॥
पुनर्दचिणहस्तेन मार्जयेदुदरं सुधीः।
उद्गीरयेत् समुद्गारं नचोद्गारस्य धारणम् ॥
व्यायामञ्च व्यवायञ्च धावनं पानमेव च।
युद्धं गीतञ्च पाठञ्च च्चणं भुक्ता विवर्जयेत् ॥
न मद्यः पीते पठनं गमनं न च कारयेत्।
न यानवाहनारोहं विवादं न च कारयेत् ॥
दिवास्वापं न कुर्य्यात्तु भुक्तोपरि च विश्रमेत्।
अकालशयनात् श्लेष्मा प्रतिश्यायः प्रपीनसः ॥
च्चयः शोफः शिरोऽर्त्तिश्च जायते चाग्निमन्दता।
मन्दपीते परिश्रान्ते हिक्काश्वासातुरेषु च ॥
भयशोकच्चुधार्त्तानां पठनान्मैथुनेन च।
व्यवाये वृद्धबाले च भाराक्रान्ते तथातुरे ॥
अतीसारे तु शोषे च तृष्णापानात्ययेऽपि च।
ग्रीष्मे वाल्ये निशाहृस्ते दिवास्वप्नं हितं भवेत् ॥

इति द्वादशोऽध्यायः

इति श्रीमहर्षिविरचिते हारीतोत्तरे अन्नपानादिकं नाम प्रथमस्थानं समाप्तम्।

---

# द्वितीयस्थानम् ।

## प्रथमोऽध्यायः ।



आत्रेय उवाच ।

अथातः सम्प्रवक्ष्यामि द्वितीयस्थानमुत्तमम् ।
शुभाशुभानि कार्य्याणि स्वस्थारिष्टानि मानुषे ।
शृणु पुत्र ! समासेन यथावत् संप्रकाशये ॥

हारीत उवाच ।

महाप्राज्ञ ! मया ज्ञातमन्नपानं यदुत्तमम् ।
इदानीं ज्ञातुमिच्छामि रोगाणां रोगकारणम् ।
कर्मजा व्याधयो ये च तान् वदस्व महामते ! ॥

आत्रेय उवाच ।

कर्मजा व्याधयः सर्वे प्रभवन्ति शरीरिणाम् ।
सर्वे नरकरूपाः स्युः साध्यासाध्या भवन्ति हि ॥
अज्ञात्वा यत् कृतं पापं पश्चात् कृच्छ्रं समाचरेत् ।
प्रायश्चित्तबलेनापि साध्यरूपो भवेद् गदः ॥
क्रियते ज्ञातरूपेण पश्चात् कृच्छ्रं समाचरेत् ।
प्रायश्चित्तं न तु कृतं कष्टसाध्यो भवेद् गदः ॥

ब्रह्मघ्नगोघ्नधरणीपतिघातकश्च
आरामतोयधरणीहरपारदारी ।
स्वाम्यङ्गनागुरुवधूकुलजाभिगामी
एते दश प्रबलरूपधरा गदाश्च ॥

पाण्डुः कुष्ठं राजयक्ष्मातिसारो मेहो मूत्रं चाश्मरी मूत्रकृच्छ्रम् ।
शूलं श्वासः कासशोफव्रणाश्च दोषाश्चैते पापरूपा नृणां स्युः ॥

ज्वरोऽजीर्णं तथा छर्दिर्भ्रमो मोहाग्निमन्दता ।
यकृत्प्लीहार्शःशोषाश्च एते चैवोपदूषकाः ॥
व्रणं शूलं शिरःशूलं रक्तपित्त तथोद्गमम् ।
एते रोगा महाघोरा अभिशापाद्भवन्ति हि ॥
अन्येऽपि बहुधा रोगा जायन्ते दोषसम्भवाः ।
अतो वक्ष्ये समासेन शृणु त्वञ्च महामते ! ॥
ब्रह्मघ्नो जायते पाण्डुः कुष्ठी गोवधकारकः ।
राजघ्नो राजयक्ष्मी स्यादारमघ्नोऽतिसारवान् ॥
स्वाम्यङ्गनाभिगमने मेहरोगा भवन्ति हि ।
गुरुजायाप्रसङ्गेन मूत्ररोगोऽश्मरीगदः ॥
स्वकुलजाप्रसङ्गेन जायते च भगन्दरः ।
शूली परोपतापी च पैशुन्यात् श्वासकासिनः ॥
मार्गविघ्नकरा ये च जायन्ते पादरोगिणः ।
अभिशापाद् व्रणोत्पत्तिर्यक्ष्मा वापि प्रजायते ॥
सुरालये जले वापि शकृद्विष्टं करोति यः ।
गुदरोगा भवन्त्यस्य पापरूपातिदारुणाः ।
परोपतापिनाञ्चैव जायते हि महाज्वरः ॥
परान्नविघ्नकरणादजीर्णमपि जायते ।
गरदश्छर्दिरोगी स्याद् भ्रमिर्मिथ्याभिभाषिणः ॥
धूर्त्तोऽपस्माररोगी स्यात् कदन्नदोऽग्निमान्द्यवान् ।
यकृत्प्लीहा भवेद्रोगी भ्रूणपातकसम्भवः ॥
व्रणं शूलं शिरःशूलं परतापोपकारिणः ।
अपेयपानरतको रक्तपित्ती प्रजायते ॥
दावाग्निदायको यस्तु जायते च विसर्पवान् ।
बहुवृक्षच्छेदनाच्च जायते च बहुव्रणः ॥
परद्रव्यापहाराच्च जायते ग्रहणीगदः ।

कुनखी स्वर्णहरणात् काष्ठहृद्दद्रुरोगवान् ॥
रौप्यस्तेयात् श्वित्रकुष्ठं ताम्रहर्त्तुर्विपादिका।
त्रपुचौरः सिध्मलश्च मुखरोगी च सीसहृत् ॥
बर्वरो लोहचौरः स्यात् चारचौरोऽतिमूत्रलः।
घृतचौरो नेत्ररोगी तैलचौरोऽतिकण्डुकी ॥
परच्छिद्री च कुणाक्षो वक्रोक्त्या वक्रलोचनः।
दोषवक्ता श्यामदेहो दुष्टवक्त्रौष्ठदोषलः ॥
रसनाशाज्जिह्वरोगी गोत्रहा नासिकाव्रणी।
एते चैव महादोषास्ततो वक्ष्यामि निष्कृतिम्।
कृच्छ्रेण येन सिध्यन्ति पापरूपा महागदाः ॥

अथ पापदोषप्रतीकारः।

गोदानं भूमिदानञ्च स्वर्णदानं सुरार्चनम्।
कृत्वा पश्चात् प्रतीकारं कुर्य्यात् पाण्डुप्रशान्तये ॥
महापापेषु सर्वस्वं तदर्द्धमुपदोषजे।
अथ वापि षड़ष्टांशात् कल्प्यं व्याधिबलाबलात् ॥
कुर्य्यात् सर्वं कृतं कर्म कुष्ठरोगोपशान्तये।
गोभूहिरण्यदानञ्च तथा मिष्टान्नभोजनम् ॥
चतुर्विधं दानमिदं दत्त्वा कुर्य्यात् प्रतिक्रियाम्।
कदाचिदपि सिध्येत आयुषश्च बलक्रिया ॥
मेहे सुवर्णदानञ्च शूले श्वासे भगन्दरे।
अर्शोभ्यस्त्वन्नदानेन श्वासकासादिमुच्यते ॥
ज्वरे चेश्वरपूजा च रुद्रजाप्यं समाचरेत्।
मतिदानान्नदानञ्च शास्त्रदानं भ्रमातुरे ॥
अग्निहोमं चाग्निमान्द्ये कन्यादानञ्च गुल्मके।
मेहाश्मरीविनाशाय लवणञ्च प्रदापयेत्।
बहुभोजनदानेन शूलरोगादिमुच्यते ॥

महाज्वरे शान्तिकञ्च सहस्रं पूजयेत् शिवम् ।
स्नापयेत्तेन सिद्धिः स्याज्ज्वररोगाद्विमुच्यते ॥
घृतमधुप्रदानेन रक्तपित्तं प्रशाम्यति ।
वनस्पतिस्नापनेन विसर्पात् परिमुच्यते ॥
तुलसीसिञ्चनेनाथ अन्तं याति बहुव्रणः ।
चतुर्विधेन दानेन साध्यः स्याद् ग्रहणीगदः ॥
सुवर्णदानात् कुनखी श्यावदन्तः सुखी भवेत् ।
रौप्यदानाच्छ्वित्रकुष्ठं साध्यं वापि प्रदृश्यते ॥
सिध्मले त्रपुदानञ्च वर्वरे लोहदानकम् ।
मुखव्रणे ददेन्नागं गोदानं बहुमूत्रके ॥
नेत्ररोगे घृतं दद्यात् सुगन्धं नासिकागदे ।
तैलदानं कण्डुरोगे रसदानञ्च जिह्वके ॥
श्यावदन्तेन देवानां संस्तुतिः प्रविधीयते ।
उष्ट्रं दद्यात् पित्तरोगे लूतारोगे ददेत गाः ॥
अन्यांश्च कथयिष्यामि मनुष्याणां शरीरगान् ।
लज्वाटः परनिन्दायां परतर्केण काणकः ॥
स्वरघातादङ्कनासः पक्षपातेन पक्षहा ।
वामनः स्वप्रशंसायां परद्वेष्टातिपिङ्गलः ॥
परस्त्रीकृत्य कर्त्ता च जायते विकृतात्मकः ।
एते महागदाश्चान्ये जायन्ते पापसम्भवाः ॥
यदि वात्र न सिद्धेत परभावो भवेन्न च ।
प्रायश्चित्तं यथोक्तन्तु कारयेद्भिषजाम्बरः ॥
भूयो जन्मान्तरे यावत् पापरोगांश्च भुञ्जति ।
प्रायश्चित्ते कृते वापि न पुनर्जायते भवे ॥

इति श्रीमहर्षात्रेयभाषिते हारीतोत्तरे द्वितीयेऽरिष्टके स्थाने
पापदोषप्रतीकारो नाम प्रथमोऽध्यायः ।

## द्वितीयोऽध्यायः।

आत्रेय उवाच।

शृणु पुत्र ! समासेन यथावत् संप्रकाश्यते।
तथारिष्टपरिज्ञानं भेषजं संप्रचक्ष्यते॥
वातिकः पैत्तिकश्चैव भयाद्धीनबलादपि।
विष्ठामूत्रसञ्चिते च षट्सु रोगः प्रजायते॥
संवत्सरेण फलदो निशायां स्वप्ने तु यामे प्रथमे शुभस्य।
स्यादत्सरार्द्धं भवति द्वितीये यामत्रये वै विहितस्तृतीये॥
निशावसाने प्रवदन्ति किञ्चिद्दशाहतः स्यात् फलदो मनुष्यः।
वर्षाद्दिनादौ फलदोहि दृष्टः पाक्षमासिको मध्यदिने प्रदिष्टः॥
दिनावसाने सुधिभिः प्रदिष्टं यामत्रये स्वप्नफलं नराणाम्।
स्वप्नेषु शुभ्राणि शुभाय धीराः सर्वाणि चैमानि विवर्जयित्वा॥
कर्पासभस्मास्थि कपालशूलं कुर्य्यान्नराणां विपदं रुजं वा।
सर्वाणि कृष्णानि विनिन्दितानि स्वप्ने नराणां विपदं रुजं वा।
कुर्वन्ति चैतानि विवर्जयित्वा गोवाजिराजद्विजहस्तिमत्स्यान्॥

मुकुरकुसुमभृङ्गानातपत्रं ध्वजं वा
दधि फलमथ नौकामन्नताम्बूलवस्त्रम्।
कमलकलसशङ्खं भूषणं काञ्चनं वा
भवति सकलसिद्धै श्रेयसे रोगिणाञ्च॥
दिनकरनिशिनाथं मण्डलं तारकाणां
विकचकमलकुञ्जैः पूर्णपद्माकराम्भः।
तरति सलिलराशिं प्रौढ़नद्याश्च पारं
सुखदसुविभवाप्तो रोगिणां रोगमुक्तिः॥

देवद्विजो वापि तरुनृपो वा स्वप्नेषु वाक्यं वदते यथैव।
तथैव नान्यच्च भवेन्मनुष्यो यदुयस्य सौख्यं विपदं रुजं वा॥

गोवाजिकुञ्जरनृपाः सुमनः प्रशस्तं
स्वप्नेषु पश्यति नरः सरुजः सुखाय ।
रोगान्वितस्य रुजनाशनसम्भवाय
बद्धोऽपि वै सुदृढबन्धविमोचनाय ॥

यो भूषणं पश्यति मन्दिरं वा कन्यां दधिक्षीरकुमारकं वा ।
सपुष्पवल्लीपरिलितं द्रुमं वा स्वस्थो धनाप्तिं रुजनाशनाय ॥
स्वप्ने पयःपानमतिप्रशस्तं पानं सुरायास्त्वजभोजनं वा ।
घृतं यवागूकृशरौदनं वा क्षैरेयिकं भोजनकं सुखाय ॥
शिला भुजङ्गा दशते कराग्रे नरस्य सुप्तस्य शरीरकेषु ।
पुत्रस्य लाभं वदते धनं वा नाशं विदध्यादचिराद्रुजं वा ॥
सश्वेतवस्त्रां रमणीं सुरम्यां स्वप्ने समालिङ्गति यो मनुष्यः ।
तस्य प्रकर्षेण सुखं प्रियं स्यात् सुपुत्रलाभश्च रुजां विनाशः ॥
यो धान्यमुद्दीक्षति सुप्तिकाले गोधूमसिद्धार्थयवादिकं वा ।
धान्याप्तिरस्यामयनाशहेतुः स्वप्नेषु शीघ्रं मनुजे सुखाय ॥

सफला धनसम्प्राप्तिर्दीप्तरोगविनाशनम् ।
सुखञ्च पुष्पिते ज्ञेयं सम्पूर्णं वाञ्छितं फलम् ॥

इति शुभस्वप्नानि ।

काकैः कङ्कैः क्रूरभुजगैः शूकरोलूकगृध्रैः
जम्बूकैर्वा वृकखरमहिषैश्चातिरूक्षैः श्वभिश्च ।
व्याघ्रैर्ग्राहैर्मकरकपिभिर्भक्ष्यमाणं स्वकायं
दृष्ट्वा योऽसौ भजति नितरां हानिमापद्रुजं वा ॥

योऽभ्यञ्जितं पश्यति चात्मविग्रहं सर्पिर्वसातैलविशेषकेण ।
शीघ्रं रुजाप्तिर्भवतीह तस्य वदन्ति धीरा निपुणं विधेयम् ॥

व्याघ्रोष्ट्रखरसंयुक्ते रथे सैरभसंयुते ।
उह्यमानो दिशं याम्यं गच्छेच्च स मृतिं भजेत् ॥
रक्तवस्त्रां कृष्णवस्त्रां मुक्तकेशीं विसर्पिणीम् ।

वामां हतां रुदन्तीं वा गायन्तीमथ पश्यति ॥
अथाह्वयति संक्रुद्धा समालिङ्गति चर्वति।
यः पश्येत् स्वापकाले तु व्याधितो मृत्युमृच्छति ॥
यस्य स्वप्ने वलिः कुष्ठो दन्तपातः प्रदृश्यते।
शोर्य्यन्ते केशरोमाणि स सुखी चापदं लभेत् ॥
यस्य खड्गादिकुन्तास्त्रैस्तोमरादिप्रहारतः।
रक्तञ्च दृश्यते देहे स सुस्थो व्याधिमृच्छति ॥

शून्यागारं पश्यते यो मनुष्यः प्रासादमालोकयते विहीनम्।
तापं सम्यक् पुष्पितानां द्रुमाणां नद्यः सो वै मृत्युमेव प्रयाति ॥
नरः प्रपश्यति भिन्नदेवं घटं वा तथा भग्नं शाखिनं मन्दिरं वा।
शीर्णं पश्येत् स्वापकाले गृहं यो व्याधिग्रस्तो मृत्युमेव प्रयाति ॥

पितरो दिशि दक्षिणस्यामाश्रिताश्च तस्य चाशु।
तनुते हि तस्य मृत्युं यस्य शूर्लविघातदर्शनम् ॥

कर्पासभस्मास्थिकपालशूलं चक्रञ्च पाशन्त्वथ वा प्रपश्येत्।
तस्यापदं रोगधनक्षयं वा रोगी मृतिं वा तनुतेऽतिकष्टम् ॥
इति प्रदिष्टानि शुभाशुभानि निशासुपुप्ते मनुजे विशेषात्।
तथा विजानीहि महामते! त्वं गदस्य नाशाय विधेयमत्र ॥
स्नानञ्च दानञ्च सुरार्चनं वा होमस्तथा मन्त्रविधारणञ्च।
दुःस्वप्नमेतैः सुविनाशमेति शुभाश्च सौख्यं वितनोति शीघ्रम् ॥

इति श्रीमहर्षिविश्वभाषिते हारीतोत्तरे द्वितीयेऽरिष्टके स्थाने स्वप्नाध्यायो नाम द्वितीयोऽध्यायः।

---

## तृतीयोऽध्यायः।

आत्रेय उवाच।

शृणु पुत्र! महाप्राज्ञ! सर्वदेहार्थसाधकम्।
वैद्यशास्त्रस्य सारं यत् स्वस्थारिष्टन्तु मानुषे ॥

यो न पश्येद्ध्रुवं सम्यक् स्वस्थोऽपि मनुजो बुधः।
तस्य षण्मासमध्ये तु मृतिश्चैवोपपद्यते॥

यो वै द्वितीया मथ मध्यलेखां नरो न पश्येत् द्विजराजकस्य।
मासत्रयं प्राप्य विसृज्य देहं जीवो व्रजेदेव यमस्य लोकम्॥
यः कर्णघोषं न शृणोति दृष्टं स्नताश्च यूकाः प्रपतन्ति मौलौ।
यो वैपरीत्यं विशृणोति शब्दं मासद्वयं प्राप्य जहाति जीवम्॥
यः स्वस्थदेहः श्वसते मुखेन नेत्रेऽरुणे श्यावमथैव वक्त्रम्।
जिह्वा विशीर्णा दशनाश्च कृष्णाः स्वस्थोऽपि शीघ्रं यमलोकगन्ता
यस्य प्रभाते च शिरोव्यथा स्याद्दीपे गतेऽस्तं न च गन्धमेति॥
विपश्यते यः पटलं च रेणोः स वै मृतिं याति न दीर्घमायुः।
यः सूर्य्यबिम्बे शशिनं प्रपश्येद्विना परीवेशमवेक्ष्यमाणः॥
धूमावृतं वा रविमण्डलञ्च प्रपश्यते शीघ्रमृतिं स गच्छेत्।
स्वस्थो निरभ्रे गगने च पश्येद् यः शक्रचापं विदिशादिशासु।
तथैव विद्यान्न जनाग्रतो यः स शीघ्रमुग्रं यमलोकमेति॥
यो वै नेत्रे निरुद्धे द्युति मथ चपलां पश्यते वै पुरस्तात्।
कर्णे रन्ध्रं निरुद्ध्वा ध्वनिमपि मनुजः संशृणोत्येव नित्यम्॥
तिक्ताद्यानां रसानां कथमपि रसनास्वादमात्रं न वेत्ति।
क्षिप्रं वैवस्वतस्यालयगति विलसन् दृश्यते मानुषस्य॥
यस्यात्युष्णं शरीरं शिशिरमथ मनुष्यस्य यस्याविलञ्च
शीतं नोचेद्धिमजलसिकते रोमहर्षो न यस्य।
दण्डाघातेन देहे भवति स पुनः श्राद्धदेवस्य लोके
लोकानां दर्शनाय द्रुतमतिरुचिरां स्वस्थतां न प्रयाति॥
तैले जले दर्पणके घृते वा परस्य नेत्रे प्रतिबिम्बमात्मनः।
पश्येन्न योऽसौ यमलोकगन्ता जानीहि तं जीवविहीनमेव॥

इति स्वस्थारिष्टानि।

उपद्रवैश्च ये पुष्टा व्याधयो यान्त्यवार्य्यताम्।

रसायनादिना वत्स ! तावदेकमना: शृणु ॥
वातव्याधिः प्रमेहश्च कुष्ठमर्शो भगन्दरम्।
अश्मरीमूढगर्भश्च तथाचोदरमष्टमम् ॥
अष्टावेते प्रकृत्यैव दुश्चिकित्स्या महागदाः।
प्राणमांसक्षयश्वासतृष्णाशोषवमिज्वरैः ॥
मूर्च्छातीसारहिक्काभिः पुनरेतैरुपद्रुताः।
वर्जनीया विशेषेण भिषजा सिद्धिमिच्छता ॥
यस्य जिह्वा भवेत् श्यावा पीता वा नीलसम्भवा।
श्वासो भवत्यतीवोष्णः शरीरं पुलकान्वितम् ॥
नीलनेत्रेऽरुणे पीते कण्ठे च घुर्घुरायते।
न जीवति ज्वरार्त्तस्तु लक्षणं यस्य चेदृशम् ॥
मुखे श्वासो भवेद् यस्य श्यावा दन्तावली पुनः।
स्तब्धनेत्रोऽवलो यः स्याज्ज्वरार्त्तो नैव जीवति ॥
बहुमूत्री बहुश्वासी क्षामोऽरोचकपीड़ितः।
हृतप्रभेन्द्रियो यस्य ज्वरो शीघ्रं विनश्यति ॥
यस्यास्यात् स्रवते रक्तं शिरोऽर्त्तिर्यस्य दृश्यते।
अन्तर्दाहो बहिः शीतः स ज्वरी मृत्युमृच्छति ॥
यस्ताम्यति विसंज्ञस्तु शेते निपतितोऽपि वा।
शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ॥
यो हृष्टरोमा रक्ताक्षो हृदि सञ्जातशूलवान्।
नित्यं वक्त्रेण चोच्छ्वसेच्च तं ज्वरो हन्ति मानवम् ॥
हिक्काश्वासपिपासार्त्तं मूढं विभ्रान्तलोचनम्।
सन्ततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः ॥
आविलाक्षं प्रताम्यन्तं तन्द्रायुक्तमतीव च।
क्षीणशोणितमांसञ्च नरं नाशयति ज्वरः ॥
घनं निष्ठीवनं नेत्रं श्वावारोचकपीड़ितम्।

अन्तर्दाहोऽसिता जिह्वा शीघ्रं नाशयते ज्वरः ॥
यस्य वोपद्रवार्त्तस्य शान्तिस्तस्य प्रदृश्यते ।
दारुणोपद्रवश्चान्यः पुनश्च बहु रूपवान् ॥
तेन मृत्योर्वशं याति सिद्धिं नेच्छेद्भिषग्वरः ।
यस्यादौ दृश्यते चैवाप्यतिसारस्तथा ज्वरः ॥
श्वासः शोषश्च यस्य स्यात् सोऽपि शीघ्रं मृतिं व्रजेत् ।
श्वासशूलपिपासार्त्तं क्षीणं ज्वरनिपीड़ितम् ॥
विशेषेण नरं वृद्धमतीसारो विनाशयेत् ।
यस्यातिसारशोफाः स्युस्तथारोचकशूलवान् ॥
सोऽपि शीघ्रं मृतिं याति बहुभिः प्रतिकर्मभिः ।
बालस्य चातिवृद्धस्य विकलस्य नरस्य च ॥
सर्वाङ्गे जायते शोफः सोऽपि सम्नियते ध्रुवम् ।
यस्याध्मानञ्च शूलञ्च श्वासस्तृष्णा विमूर्च्छनम् ॥
शिरोऽर्त्तिर्यस्य दृश्येत सोऽपि मृत्युमवाप्नुयात् ।
पाण्डुदन्तनखो यश्च पाण्डुनेत्रश्च मानवः ॥
पाण्डुसङ्घातदर्शी च पाण्डुरोगी विनश्यति ।
पाण्डुत्वक् पाण्डुनेत्रे च मूत्रं वा पाण्डुरं भवेत् ॥
शुक्लाचमनदृष्टार मूर्द्धश्वासनिपीड़ितम् ।
कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम् ॥
धातुहीनो भवेद्यस्तु शोफश्वासनिपीड़ितः ।
बहुभोज्यी घृणावांश्च राजयक्ष्मी विनश्यति ॥
हुङ्कारः शीतलो यस्य फुत्कारे चोष्णता भवेत् ।
स्निग्धनाड़ी न निर्वाहः शीघ्रं याति यमालयम् ॥
अङ्गकम्पो गतेर्भङ्गो मुखं वा कुङ्कुमप्रभम् ।
फुत्कारे च भवेद्वायुः स च याति यमालयम् ॥
चिरप्रवृद्धरोगन्तु भोजनेऽप्यसमर्थकम् ।

भग्नगात्रमुपेचेत भेषजोऽप्यरहस्यकम् ॥
एतादृशं नरं ज्ञात्वा नोपचारं चरेत् बुधः।
विट् ध्वंसश्वासशोफार्त्तं तथा ज्वरनिपीड़ितम् ॥
गम्भीरश्वसनं यस्य उदरं चयते नरम्।
श्वासः शूलं पिपासा च विद्वेषो ग्रन्थिमूढ़ता ॥
भवन्ति दुर्बलत्वञ्च गुल्मिनो मृत्युमेष्यतः।
नेत्रे जिह्वाधरौ यस्य रक्तौ वा रुधिरं वमेत् ॥
रक्तमूत्री रक्तसारी रक्तपित्ती विनश्यति।
लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः ॥
रक्तानाञ्च दिशां द्रष्टा रक्तपित्ती विनश्यति।
मुखशोफी भवेद् यस्य भ्रमारोचकपीड़ितः ॥
विबन्धोदरशूली च उदरी चयमाप्नुयात्।
आध्मानं बद्धविटकञ्च छर्दिहिक्कारुजान्वितम् ॥
रुजाश्वाससमाविष्टं विद्रधिर्नाशयेन्नरम्।
यस्य तृष्णा भवेद्घोरा मुहुर्वापि वमिर्भवेत् ॥
भ्रमापन्नो भवति न स जीवति मानवः।
अपूर्ण दिवसे नारी ज्वरार्त्ता पुष्पमाप्नुयात् ॥
सा न जीवेत् महाप्राज्ञ ! यस्या हि मारणी भवेत्।
यः शोफश्वाससंयुक्तस्तृष्णायुक्तश्च शूलवान् ॥
कामलापाण्डुरोगार्त्तो नरश्च स विपद्यते।
वातमूत्रपुरीषाणि क्रिमयः शुक्रमेव च ॥
भगन्दरात् प्रस्रवन्ति यस्य तं परिवर्जयेत्।
शूलञ्च नाभौ वृषणे बद्धमूत्रं रुजान्वितम् ॥
अश्मरी चपयत्याशु सिकता शर्करान्विता।
गर्भकोषपरिष्वङ्गी विहृङ्गो योनिसङ्कुतः ॥
हन्ति स्त्रियं मूढ़गर्भो यथोक्तोपद्रवान्वितः।

पार्श्वभङ्गान्नविद्वेषशोफातिसारपीड़ितम् ॥
पूय्यमाणं विरिक्तञ्च वर्ज्जयेदुदरान्वितम् ।
बहुशोऽतिरुजार्त्तन्तु प्रक्षीणं वलितभ्रुवम् ॥
नेत्राभ्याञ्च विकुर्वाणमपस्मारो विनाशयेत् ।
शूलं सुप्तत्वचं भग्नमाध्मानपरिपीड़ितम् ॥
रुजार्त्तिमन्तञ्च नरं वातव्याधिर्विनाशयेत् ।
यथोक्तोपद्रवारिष्ट मतिप्रसृतमेव च ॥
पीड़कापीड़ितं गाढं प्रमेहो हन्ति मानवम् ।
प्रभिन्नं प्रसृताङ्गञ्च रक्तनेत्रं हतस्वरम् ॥
पञ्चकर्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम् ।
अवाङ्मुखो वोन्मुखो वा क्षीणमांसबलो नरः ॥
जागरूको ह्यसन्देहमुन्मादेन विनश्यति ॥

इति व्याध्यरिष्टानि

यः शीलवान् क्रोधनता मुपैति यः क्रोधवान् शीलगुणं च ध
द्वाविव मृत्युं तनुतो विधिज्ञ ! स्थूलो नरः शीघ्रतरं कृशाङ्गः
यो धर्मशीलो भवतीह पापो पापात्मको धर्मरतो यदि स्या
स मृत्युभाजी भवतीह शीघ्रं यश्च प्रकृत्या विकृतिं प्रयाति
यो गौरवर्णो विदधाति कार्ष्ण्यं कृष्णोऽपि गौरत्वमुपैति यश्च
तथा मृतिं याति नरःप्रकृत्या शीघ्रं विकृत्या जडतोऽपि यो
यो वैपरीत्यं श्रवणेऽपि शब्दं गृह्णाति वा न शृणुते स शीघ्रं
स वै मृतिं पश्यति यो न पश्येत् छायां स्वकीयां धरणीप्रपन्न

यो वेन्द्रियैः प्रतिहतः कृशतां प्रयाति
स्थूलोऽतिमात्रं स भवन् मरणं विपश्येत् ।
नूनं रसं खलु न वेत्ति जिघत्समानः
सोऽप्यन्तकप्रियतमो वदते मनुष्यः ॥

यस्यास्यगन्धमाघ्राय भजन्ते नीलमक्षिकाः।
नासिकायां शरीरे वा सोऽपि लोकान्तरं व्रजेत्॥

इति पञ्चेन्द्रियविकारो नामाध्यायः।

इति श्रीमदात्रेयभाषिते हारीतोत्तरे द्वितीयेऽरिष्टके
स्थाने तृतीयोऽध्यायः।

---

## चतुर्थोऽध्यायः।

अथ नक्षत्रयोगेन व्याधिर्यस्य प्रजायते।
साध्यासाध्यञ्च याप्यञ्च वक्ष्यामि शृणु पुत्रक!॥

आदित्ययोगेन मघा विशाखा
चन्द्रेण युक्ता कुज आर्द्रया तु।
मूलं बुधे सुरगुरौ यदि कृत्तिका स्यात्
शुक्रेण रोहिण्यसितेन हस्तः॥
एतान् वदन्ति निपुणा यमघण्टयोगान्
व्याधिप्रपन्नमनुजो यदि पुण्ययोगात्।
जीवेद्यदा कथमसौ करणेन हीनो
घोरां तरन् सुविपदञ्च कथं सुखं स्यात्॥

आदित्येनानुराधा भवति हिमरुचिश्चोत्तरासंप्रयुक्तो
भौमः सप्तर्षियुक्तो बुध इह तुरगो योग एषोऽशुभाय।
जीवो वा चेन्मृगशिरसि गतोऽश्लेषया भार्गवो वा
हस्तेनादित्यपुत्रः प्रवदति न शुभं शास्त्रविद्योगयुक्तः॥

इति मृत्युयोगः।

दिनकरकरयुक्तः सौम्ययुक्तोऽपि सोम-
स्तुरगसहितभौमः सोमपुत्रोऽनुराधा।
सुरगुरुरपि पुष्ये रेवती शुक्रवारे

दिनकरसुतयुक्ता रोहिणी सौख्यहेतुः ॥

इति अमृतयोगः

शूले वज्रेऽतिगण्डे वा व्याघाते व्यतिपातके ।
विष्कम्भयोगयुक्ते च नक्षत्रे क्रूरदैवते ॥
एतैरसाध्या ज्वरिणस्तस्माद् योगान् परीक्षयेत् ।
योगे ऋक्षे तथा वारे क्रूरे प्राप्ते न जीवति ॥

इति क्रूरयोगः

सिद्धः शुक्लः शुभः प्रीतिरायुष्मांश्च सुकर्मणः ।
धृतिर्वृद्धिर्ध्रुवो हर्षः सुखसाध्या इमे स्मृताः ॥

इति योगावज्ञाः

मघा विशाखा भरणी तथार्द्रा मूलं तथा कृत्तिकहस्तऋक्षं
एतान् प्रशस्तान् मुनयो वदन्ति वारक्रमेणैव विचिन्तनीयाः

मघाभरणीहस्तेषु मूले वा ज्वरितोऽपि वै ।
मृत्युमाप्नोति सोऽपि नात्र कार्या विचारणा ॥
अश्विनी रोहिणी पुष्या मृगज्येष्ठा पुनर्वसुः ।
एते साध्याश्च विज्ञेया ज्वरिणाञ्च विशेषतः ॥

पूर्वात्रयं स्वातिरथापि चित्रा त्वनूराधयार्द्रा श्रवणं धनिष्ठा ।
मूलं विशाखा सह कृत्तिकाभिरसाध्यरोगी ज्वरितस्य चापि
एतेषु सद्योज्वरपीडितस्य असाध्यं सुसाध्यं कुरुते नरस्य ।
तस्मात्तु विज्ञाय बुधश्च कुर्यात् रुजां विनाशं प्रतिकर्मभिश्च

अश्विन्या सप्तरात्रन्तु भरण्यां मृत्युमीक्षते ।
कृत्तिकायां नवरात्रं रोहिण्यान्तु दिनत्रयम् ॥
मृगेण बहुपीड़ा स्यादार्द्रायां मृत्युरेव च ।
पुनर्वसौ च पुष्ये च सप्तरात्रन्तु पीड्यते ॥
नवरात्र तथाश्लेषा मघास्वेति यमालयम् ।
पूर्वा मासत्रयं ज्ञेयं उत्तरा पञ्चकत्रयम् ॥

पूर्वात्रये त्रयो मासाः शुभा ज्ञेया मनीषिभिः।
एतेषां तुर्य्यगे पादे यदि रोगस्तदा मृतिः॥
हस्ते न प्राप्यते सौख्यं चित्रा पञ्चदशाहकम्।
स्वातिः षोड़शरात्रन्तु विशाखा विंशरात्रकम्॥
अनुराधा पञ्चमेकं ज्येष्ठा दशदिनानि तु।
मूलेन मृत्युमाप्नोति आषाढ़ासु त्रिपञ्चकम्॥
उत्तरा विंशरात्रेण श्रवणे मासकद्वयम्।
मासद्वयं धनिष्ठा स्यात् सप्तर्षिर्दिनविंशतिः॥
नवरात्रं भवेत् पूर्वा उत्तरा पञ्चकत्रयम्।
दशाहं रेवतीपीड़ा मुच्यते व्याधिभिस्ततः॥
कृत्तिकासु ज्वरस्तीव्रो व्याधिर्भवति पैत्तिकः।
प्रथमे चरणे चैव दिग्दिनानि विनिर्दिशेत्॥
दशैव द्वितीये भागे तृतीये दिनपञ्चकम्।
रोहिण्यां नवरात्रन्तु प्रथमेंऽशे प्रकीर्त्तितम्॥
द्वितीये द्विगुणं प्रोक्तं तृतीये दशरात्रकम्।
नक्षत्रे चन्द्रदैवत्ये सप्ताहं प्रथमेऽशके॥
तथैव पञ्चरात्रं स्यात् मध्ये द्वादशवासरात्।
तृतीयांशे तथा ज्ञेयं मृत्युर्मासादनन्तरम्॥
उत्तरा प्रथमांशे च वासराणि चतुर्दश।
द्वितीये सप्तरात्रन्तु तृतीये दिवसान् नव॥
यदि हस्ते भवेद्रोगः प्रथमे सप्तरात्रकम्।
चत्वार्य्यह्नानि द्वितीये तृतीये दिनपञ्चकम्॥
मृत्युं विद्यात्तथा चान्ते त्वाष्ट्रे यस्य भवेज्ज्वरः।
त्रिभिर्मासैर्द्वितीयांशे रोगो भवति दारुणः॥
तृतीयांशे तथा ज्ञेयं वासराणि त्रयोदश।
वायव्ये प्राक् सप्तदश द्वितीये चैकविंशतिः॥

अस्यैव तु तृतीयांशे मृत्युमेव विनिर्दिशेत् ।
प्रथमांशे विशाखायां त्रिगुणाः षोड़श स्मृताः ॥
द्वितीये द्वादश प्रोक्तास्तृतीयेऽपि तथैव च ।
मैत्रांशे प्रथमे सप्त द्वितीये पञ्चमादिशेत् ॥
तृतीयांशे चतुःषष्टिर्वासराणां महामुने ।
पञ्चमैन्द्रे प्रथमके द्वित्रिभागे च षोड़शः ॥
मूलकेऽंशे तृतीये तु पञ्च एव मनीषिभिः ।
आद्ये पूर्वे त्रयो मासा मध्यमेऽह्नानि षोड़शः ॥
तृतीये च पुनर्मृत्युर्वासरात् संप्रजायते ।
वैश्वे च प्रथमे पक्षं मध्ये द्वादशरात्रिकम् ॥
दिनानां विंशतिः प्रोक्ता तृतीयांशे महामुने ! ।
सप्ताहमादौ श्रवणे विंशतिर्मध्यमे मता ।
षोड़शाहं तृतीयांशे सत्यमेतद् ब्रवीम्यहम् ।
विंशतिर्वासरः पूर्वा मध्यमे मासयुग्मकम् ॥
मासस्तृतीये विज्ञेयो दैवज्ञैश्च निवेदितम् ।
वारुणे दारुणो रोगस्त्रिपक्षं प्रथमांशके ॥
द्वितीये मासषट् कन्तु षोड़शाहं तृतीयके ।
अहिर्व्रध्ने पञ्चमादौ मध्ये मासं विनिर्दिशेत् ॥
अन्तेऽष्टाविंशतिर्ज्ञेया पीड़ा स्यात् पापकर्मणि ।
रेवत्याः प्रथमे चाष्टौ द्विभागे चैव षोड़शः ॥
दश पर्वाहपूर्वांशे मध्ये सप्तदशस्तथा ।
अन्ते त्रिंशद्दिनान्येवं प्रोक्तानि पूर्वसूरिभिः ॥
अश्विन्याः प्रथमे भागे दिनमेकं प्रकीर्त्तितम् ।
द्वितीये पञ्चरात्रन्तु तृतीये सप्तकं तथा ॥
भरण्याः प्रथमे चांशे सप्तवासरमेव च ।
मध्ये मृत्युस्तथाचान्ते रोगो मासत्रयावधिः ॥

एवं ज्ञात्वा सुधीः सम्यक् कुर्य्यात् प्रशमनक्रियाम्।
नक्षत्रस्य त्रयो भागा आत्रेयेण प्रकाशिताः।

इति श्रीमद्दर्षात्रेयभाषिते हारीतोत्तरे द्वितीयेऽरिष्टके स्थाने नक्षत्रज्ञानं नाम चतुर्थोऽध्यायः।

---

## पञ्चमोऽध्यायः।

अथ नक्षत्रहोमं व्याख्यास्यामः।

अर्कः खदिरपालाशौ वदरी पारिभद्रकः।
दूर्वा शमी कुशः काशः पीप्पली वटसम्भवः॥
जम्ब्वाम्रः करह्लाटश्च सोमवल्ली कलिद्रुमः।
रक्तसारश्चन्दनञ्च जयन्ती वृद्धदारकम्॥
शतावरी सहचरी स्वर्णक्षीरी निशायुगम्।
उडुम्बरस्तथा विल्वः समिद्वर्गः प्रकीर्त्तितः॥

इति समिधः।

रक्तचन्दन-गोरोचना गैरिक-निम्ब विल्व-पत्तङ्ग-कुङ्कमकस्तुरिका-घनसार-श्रीपर्णी-सुरदारु-हरिचन्दनपद्मक हरिद्राद्वय-कालीयका गुरु-शिंशपा-शाल सरल-ककुभेङ्गुदी-शैलेयक-मनोह्वा-पिप्पल-न्यग्रोधपलाशानि गन्धानि। पद्म विल्व-सुरमेङ्गुदी-नाग-केशर-जयन्ती-शमी-चम्पकार्क-किंशुक--कर्णिकार गिरिकर्णिका-सहचरी शैलुष-जम्ब्वाम्रार्जुन-पियालोत्पल-केतकी-युथिका-काञ्चनार-पाटला वर्वरी अगस्तिका-कह्लाराशोकानि पुष्पाणि। धूपदीपादिभिः अलङ्कारैरलङ्कृतं वास्तुमण्डलं कृत्वा ईशानादिक्रमेण नक्षत्रमण्डले यथोक्तगन्धपुष्पैरर्च्चयेत्। तन्मण्डल-मध्ये आदित्यादिनवग्रहान् समभ्यर्च्च्य क्रमेण समिद्भिर्होमं कुर्य्यात्। दधिमधुघृताक्ताभिः समिद्भिरश्विन्यादिक्रमेण जुहुयात् आकृष्णेति अर्कसमिधा इदमश्विन्यै। विष्णोरराटमसीति खदिर-

समिधा इदं भरण्यै। मधुमध्विति पलाशसमिधा इदं कृत्तिकायै। एवं क्रमेण काण्डादिति वटरीसमिधा रोहिणीम् इममग्ने गङ्गे इति पारिभद्रसमिधा मृगशिरां श्रीश्चते इति दूर्वासमिधा आर्द्रां याः फलिनीरिति शमीसमिधा पुनर्वसुम् अम्बे अम्बिके इति कुशसमिधा पुष्याम् इमं देव इति कुशसमिधा अश्लेषां त्र्यम्बकं यजामहे इति पिप्पलसमिधा मघां या ते रुद्र इति वटसमिधा पूर्वफल्गुनीं सद्यो जातेन इति जम्बुसमिधा उत्तरफल्गुनीं शन्नो देवीरिति आम्रसमिधा हस्तां कयानश्चित्रेति करहाटसमिधा चित्रां द्रुपदादिवेति सोमवल्लीसमिधा स्वातीं सोमं राजानमिति विभीतकसमिधा विशाखां मूर्द्धानन्दिवमिति रक्तसारसमिधा अनुराधाम् अभीषुण इति चन्दनसमिधा ज्येष्ठाम् आतून इति जयन्तीसमिधा मूलां भद्रं कर्णेभिरिति वृद्धदारकसमिधा पूर्वाषाढ़ाम् आयाहीति शतावरीसमिधा उत्तराषाढ़ां सर्वतः पाणिपादन्त इति सहचरीसमिधा श्रवणाम् आप्यायस्वेति स्वर्णक्षीरीसमिधा धनिष्ठां माता रुद्राणामिति हरिद्रासमिधा शतभिषां देवीव इति दारुहरिद्रासमिधा पूर्वभाद्रपदां स्वस्तिन इति उडुम्बरसमिधा उत्तरभाद्रपदां योवः शिव इति विल्वसमिधा रेवतीं होमयेत्। घृतेन पूर्णाहुतिं दद्यात् नवग्रहान् हुत्वा तस्मात् समिद्भिः स्नानमाचरेत्। शुक्लवस्त्रोत्तरीयं यज्ञोपवीतसहितं रोगिणं कृत्वा वेदादिमन्त्रैरभिषिच्य ब्राह्मणेभ्यो भूवस्त्रहिरण्यादिदानं कुर्य्यात्। इति विधाने कृते सम्यक् शान्तिर्भवति।

इति श्रीमदृष्यात्रेयभाषिते हारीतोत्तरे द्वितीयेऽरिष्टके स्थाने होमविधिर्नाम पञ्चमोऽध्यायः।

## षष्ठोऽध्यायः ।

अथ रोगाभिभूतानां दूतारिष्टं भिषग्वर ! ।
शुभं वाशुभमेवान्यत् समासेन प्रचक्षते ॥
आतुरोपक्रमार्थन्तु दूतो याति भिषग् गृहे ।
तस्य परीक्षणं कार्य्यं येन संलक्ष्यते गदः ॥

ब्रुञ्जान्धमूकं वधिरञ्च वामनं स्त्रियञ्च कुब्जं तृषितं विजीर्णम् ।
श्रान्तं क्षुधार्त्तं श्रमितञ्च दीनं शस्तं न वै वेदविदो वदन्ति ॥
ाषायकृष्णार्द्रसुपीतवाससा तथैव वस्त्रावृतमस्तकेन ।
प्रश्रुप्लुतैर्वा नयनैश्च युक्ताः केशैस्तथा मुण्डितमस्तकाश्च ॥
नक्रैकराक्षाद्रैशिरोरुहाश्च खर्वास्तथा धर्मवहिष्कृताश्च ।
ग्तान्न शंसन्ति विदुर्मुनीन्द्रा दूतान्नराणां रुजनाशनाय ॥
यः कर्कशः क्रोधनपाशपाणिर्भिषग्विगर्ही तमसो वृतश्च ।
ग्ते न शस्ताः प्रवदन्ति धीरा दूता विकारं प्रतिवर्द्धयन्ति ॥
यः काष्ठहस्तोद्धृतपाशपाणिस्तथातुरोदीनवचो हि रोदितः ।
रक्लिन्ननेत्रो गमनोत्सुकोऽपि वर्ज्योरुजार्त्तोऽशुभकारिदूतः ॥
यो रज्जुहस्तोद्धृतपाशपाणिर्याम्यां दिशं च परिभूय तूर्णम् ।
यो वावदीति प्रवलं सरोपात्तथा समागच्छ वदेच्च दूतः ॥

न कूटहस्तोऽवष्टभ्य वक्रपादेन तिष्ठति ।
तस्मादाकुण्ठवादी यो न शस्तो वैद्यकर्मणि ॥
यथा गच्छति शीघ्रेण आविश्योत्थाय मुह्यति ।
पादौ प्रसार्य्य विशति मस्तके विन्यसेत् करम् ॥
भिनत्ति लोष्टकाष्ठञ्च तृणं स्फोटयते क्वचित् ।
अथवा स्पृशते नासां स्तनं वा स्पृशते पुनः ॥
भूमिं लिखति पादेन रेखां वापि करोति यः ।
निद्रां वा कुरुते यस्तु सदूतोऽरिष्टकारकः ॥
यः श्वेतवस्त्रावृतपूर्णपाणिः संपूर्णताम्बूलमुखः प्रशस्तः ।

द्विजस्तथा मानवकः सुशीलः प्रज्ञाधिकस्त्वाह्वयते सुखाय ॥

कुसुममुकुरचक्रच्छातपत्रं सरोजं
सितकिशलयगन्धं पद्मकिञ्जल्कपुष्पम् ।
करतलगतवस्त्रं धूपपूगाङ्गरागं
करतलधृतमेतत् सौख्यकर्त्ता हि दूतः ॥

आगत्योदीच्य पूर्वामथ वरुणदिशं मैशमाश्रित्य शान्तो
दृष्ट्वा वैद्यं प्रहस्य प्रवदति निपुणं नाति नीचं न चोच्चम् ।
उत्तिष्ठेति प्रसादं कुरु वचनमिदं सौख्यवार्त्तां तनोति
प्राज्ञैः स्वार्थं प्रकृष्टं सुखमगदहरं रोगिणां वैद्यलाभम् ॥

पूर्वां दिशं समासाद्य प्रशान्तः शान्तया गिरा ।
वदन्ति वैद्यलाभाय रोगिणाञ्च सुखावहम् ॥
यश्चागत्योपविष्टोऽपि श्लोकं वाथ सुभाषितम् ।
वदते शान्तया वाचा वैद्यलाभस्य शान्तये ॥
योऽभिवाद्यापि वैद्यस्य क्षेमं संपृच्छते पुनः ।
फलं ददाति पुष्पं वा रोगिणाञ्च सुखावहम् ॥
तस्य सौख्यं रुजां शान्तिर्यस्य दूता इदं विदुः ।
किमत्र बहुनोक्तेन रम्यो दूतः सुखावहः ॥
एवं जानाति यो वैद्यस्तस्य सिद्धिः सुनिश्चिता ।

इति श्रीमहर्ष्यात्रेयभाषिते हारीतोत्तरे द्वितीयेऽरिष्टके दूतपरीक्षालक्षणो नाम षष्ठोऽध्यायः ।

---

## सप्तमोऽध्यायः ।

आत्रेय उवाच ।

इदानीं निर्गमे पुत्र ! प्रवेशे वा गृहस्य च ।
शुभाशुभानि सर्वाणि वक्ष्यामि शकुनानि ॥

राजा गजो द्विजमयूरक-खञ्जरीटा-
व्याघः शकुन्तरजकः शितवस्त्रयुक्तः।
पुत्रान्विता च युवती गणिका च कन्या
श्रेयः सुखाय यशसां प्रतिदर्शयन्ति॥

लट्टः श्येनोभासहारीतचक्रा भारद्वाजश्छिक्करस्छागमंत्तः।
एते श्रेष्ठा दक्षिणे वाथ सव्ये वैद्याविशे निर्गमे श्रेयसे च॥
सर्पोलूकौ वानरः शूकरश्च गोधा ऋक्षः कृकलासः शशश्च।
एतेऽरिष्टा निर्गमे वा प्रवेशे कार्य्याघाते नोपकारेषु शस्ताः॥

मृगा वा पिङ्गला वापि प्रशस्ता दक्षिणे सदा।
निर्गमे वा प्रवेशे च दक्षिणे शुभदायकः॥
एको वा त्रयो वा पञ्च सप्त वा नवसंख्यया।
भाग्यकाले नराणान्तु मृगा यान्ति प्रदक्षिणाः॥

शिखिहयगजगोधा रासभो भृङ्गराजो
सखरपिककपोताः पोतकी शूकरी वा।
तदनु विहगराजो मङ्गलाशंसिनः स्यु-
र्वदति शकुनवेत्ता वामतो निर्गमे च॥

तित्तिरिः कुररः क्रौञ्चः सारसा भासशूकराः
वामे तु शुभशंसो च निर्गमे कार्य्यसिद्धये।

काको दक्षिणतः श्रेष्ठो निर्गमे शुभदायकः।
प्रवेशे गदितः श्रेष्ठो वामतः कृष्णवायसः॥

ालको हि शशकोऽपि कर्कटकौर्त्तनञ्च गदितं न सुखाय।
: शुभदर्शनाय असौ भवेयुः सर्पगोधाकृकलासविड़ालाः॥
ःर्शने हितकरं प्रवदन्ति खञ्जरीटमरालछिक्कराणां।
ामतः शुभकराः प्रवदन्ति दार्वाघाटवराटकशुकाश्च॥

इति शुभाशुभशकुनानि।

निर्गमे विविधकार्य्यसिद्धये भृङ्गराजरजतं पयो जलम्।

मत्स्यमांसरुधिरं मृतकं वा धौतवस्त्रमुकुरञ्च पिधानम् ॥
मार्गं छिन्दति मार्जारः सर्पो वा कृकलाशकः ।
गोधा वापि प्रवेशे च पदमेकन्तु न व्रजेत् ॥
स्खलन्ति पादशीर्षाणि वचनानि स्खलन्ति वा ।
विक्रुष्टं वचनं श्रुत्वा पदमेकन्तु न व्रजेत् ॥
गृहाणां ज्वलनं दृष्ट्वा भिद्यते सजलं घटम् ।
पतनं भूरुहाणाञ्च दृष्ट्वा कुर्य्यान्न चंक्रमम् ॥
आक्रोशवचनं श्रुत्वा मार्ज्जाराणां रुतं तथा ।
कलहं गृहलोकस्य दृष्ट्वा चंक्रमणं न च ॥

इति दर्शनारिष्टम् ।

कनककङ्कणमिव विभूषणं सफलपुष्पमथामववारुणी ।
फलमशाककर ज्वरिणां मत शुभकरा हि भवेत् भिषक् ततः ॥

इति शकुनाध्यायः ।

एवं ज्ञात्वा परमनिपुण पानमन्नादिकानां
वीर्य्यं चैषां गुणमपि तथा कोपनं कोपवेगम् ।
आदानं वा पुनरपि चय कोपनस्योपचारम्
वैद्यो विद्वान् भवति भवने पूजितो राजलोकैः ॥

इति सप्तमोऽध्यायः ।

इति श्रीमदात्रेयभाषिते हारीतोत्तरे द्वितीयस्थानं समाप्तम् ।

---

# अथ तृतीयस्थानम् ।

## चिकित्सास्थानम् ।

### प्रथमोऽध्यायः ।

अथातः संप्रवक्ष्यामि रोगसङ्करकारणम् ।
श्रमाद् व्यायामरोधाद् वा चिन्ताशोकभयादपि ॥

क्रोधादौषधगन्धेन चयादुधातोर्विशेषतः।
उदीर्य्य कोष्ठादग्निञ्च रक्तपित्तं तथा बहिः॥
त्वगाश्रितञ्च संभूय ज्वरं सद्यः करोति हि।
उक्तहेतुर्ज्वरो वापि ज्वरान्मन्दानलो भवेत्॥
मन्दानलान्मन्दशक्तिस्तस्मादन्नातिसेवनात्।
जायते कामला तस्मात् प्ररूढे स्याड्हलीमकम्॥
हलीमकाद्भवेत् पाण्डुस्तस्माद् यक्ष्मा प्रजायते।
यक्ष्मणा जायते शोफः शोफादुदरमेव च॥
तस्माद् गुल्मञ्च वाताख्यं गुल्मात् श्वासोऽथ शूलिता।
मन्दाग्नित्वं भवेत्तस्मात् स्वरभेदोऽथ वा चयः॥
एतेषां सर्वरोगाणां मुत्पत्तिः स्यात् ज्वरेण तु।
ज्वरेण मृत्युर्विज्ञेयो न मृत्युः स्याज्ज्वरं विना॥
शृणु भिषजरोगज्ञ ! द्वितीयं रोगसङ्करम्।
मन्दज्वरो भवेन्नृणामतीसारस्ततो ज्वरः॥
तेन चापि भवेद्धिक्का शोषो मोहो भ्रमोऽरुचिः।
एतेषां शोफतो मृत्युस्तृतीयः कथ्यतेऽधुना॥
दिवास्वप्नादिदोषैर्वा प्रतिश्यायश्च जायते।
तस्मात् कासः समुद्दिष्टः कासात् पीनस एव च॥
तस्मात् चयः चयात् शोफो ज्वरेणापि मृतिं व्रजेत्।
ज्वरः चयश्च यक्ष्मा च कुष्ठगुल्मार्श सङ्ग्रहाः॥
शर्करा मेह उन्मादस्त्वपस्मारो भगन्दरः।
एते महाघोरतरा याप्यं कुर्वन्ति मानवम्॥
वातपित्तादयो दोषास्तथा श्लेष्मसमुद्भवाः।
जायन्ते व्याधयः सर्वे तेषां वच्याम्युपक्रमम्॥
वातः पचति सप्ताहात् त्रिरात्रात् पित्तमेव च।
श्लेष्मा सार्द्धदिनेनापि विपचेद्भिषजां वर !॥

द्वन्द्वजं वातपित्तञ्च नवरात्रेण पच्यते ।
श्लेष्मवातौ दशाहेन पञ्चाहात् पित्तश्लैष्मिकम् ॥
द्वन्द्वजानाञ्च तुर्य्याहात् पाचनं शमनं भवेत् ।
त्रिदोषस्य च घोरस्य पाचनं द्वादशे दिने ॥
सन्निपातश्च पचति चतुर्द्दशदिनैरपि ।
ज्ञात्वा दोषवलं पक्वं तस्माद्दद्यात्तु पाचनम् ॥
युक्तं निदानलक्षैस्तु तस्मात् संशमनक्रिया ।
सप्ताहेनापि पच्यन्ते सप्तधातुगता मलाः ॥
चिरादपीह पच्यन्ते सन्निपातज्वरे मलाः ।
विरामस्याप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि ॥
न भवेत् सप्तमे चाह्नि विरामज्वरकारणम् ।
विचार्य्य भेषजं दद्यादजीर्णे मतिमान् भिषक् ॥
मन्दो हि सुतरामग्निर्भेषजं न विपाचयेत् ।
सर्वेषु दोषशान्त्येषु पाचनं लङ्घनं स्मृतम् ॥
लङ्घितं मध्यलङ्घितमतिलङ्घितमेव च ।
लक्षणं वक्ष्यते चैषां मनुष्याणां शृणुष्व मे ॥
गतक्लमोऽरुचिर्ग्लानि रिन्द्रियाणां प्रसन्नता ।
लङ्घने दोषपाकन्तु शुद्धलङ्घितलक्षणम् ॥
किञ्चित् क्लमोऽरुचिर्ग्लानिरिन्द्रियाणां विवर्णता ।
बहुतृष्णाल्पतृच्चापि श्रमश्चैव भिषग्वर ! ॥
किञ्चित् संस्निग्धता गात्रे रुचिवाधातिबन्धता ।
मध्यपाको च दोषः स्यान्मध्यलङ्घितलक्षणम् ॥
वैकल्यं जायते तन्द्रा विड्भेदश्च विनिद्रता ।
वेपथुश्च शिरोऽर्त्तिश्च क्षुत्क्षामं शूलमेव च ॥
श्यावास्यं स्रवतो नेत्रे मूर्च्छामोहश्रमातुरम् ।
अतिलङ्घितमेतैस्तु लक्षणं संविभावयेत् ॥

वेलाज्वरे भूतज्वरे तथा पित्तज्वरेऽपि च ।
आयासे क्रोधजे वापि भयकामज्वरेऽपि च ॥
एतेषां लङ्घनं नैव कारयेद् भिषगुत्तमः ।
वालं वृद्धं कृशं चीणमतिसारव्रणातुरम् ॥
गुर्विणीं सुकुमारञ्च लङ्घयेन्न कदाचन ।

इति लङ्घनीयाः ।

मासे मन्दज्वरे तीव्रेऽरुचिविड्‌वन्धकेऽपि च ॥
अजीर्णे तु प्रशस्तञ्च लङ्घनं मात्रयान्वितम् ।
स्निग्धत्वं चातिगात्राणामुदरं गर्जते भृशम् ॥
शिरोऽर्त्तिर्जठराध्मानः प्रततं कण्ठकूजनम् ।
अरुचिः पीतता मूत्रे निद्रातन्द्रातुरं नरम् ॥
आमज्वरञ्च विज्ञाय लङ्घयेद्भिषगुत्तमः ।

इति लङ्घनयोग्याः ।

अनशनवमनविरेचन-रुधिरस्रुति-तप्ततोयपाचनैश्च ॥
स्वेदनकर्म्मसमेतैः षड्‌विधं लङ्घनं गदितम् ।
क्षुत्क्षामं श्रमशैथिल्य श्रमवेगज्वरातुरम् ॥
अन्तर्दाहं रक्तमूत्रं विरामज्वरलक्षणम् ।
वातिको लङ्घनैः षड्‌भिः पैत्तिकस्तु दिनत्रयम् ॥
सप्तभिः पच्यते श्लेष्मा दृष्ट्वा लङ्घनमाचरेत् ।
त्रिदोषो दशरात्राणि पच्यते लङ्घनैस्तु सः ॥
दिने पञ्चदशे प्राप्ते पच्यते सान्निपातिकः ।
मुञ्चेद्वा चातुरं हन्ति भवेद्वा विषमज्वरः ॥
वाल्ये रक्तमया दोषाः रक्तपित्तादनन्तरम् ।
षोडशे तु समे प्राप्ते त्रिदोषप्रभवा गदाः ॥
पञ्चविंशतिमप्राप्ते ज्वरो वै सान्निपातिकः ।

तृषिते सलिलञ्चोष्णं दद्याद्वातकफज्वरे ॥
दीपनं स्यात्तु कफजे वातपित्तानुलोमनम् ।
उदीर्य्य चाग्निं स्रोतांसि मृदुकस्य विशोधयेत् ॥
वातपित्तकफस्वेद-शकृन्मूत्राणि सारयेत् ।
मुस्तपर्पटकोदीच्य-नागरोशीरचन्दनैः ॥
शृतशीतं जलं दद्यात्तृड्दाहज्वरशान्तये ।
यदप्सु शृतशीतासु षडङ्गादि प्रयुज्यते ॥
कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि ।
अर्द्धशिष्टन्तु तद्देय पाने पेयादि सम्बिधौ ॥
एतां क्रियां प्रयुञ्जीत षड्रात्रं सप्तमेऽहनि ।
पिबेत् कषायसंयोगान् ज्वरघ्नान् साधुसाधितान् ॥
वातपित्तकफैरेव रसरक्तमसृच्चयात् ।
जायते यो ज्वरः सम्यक् पक्वे क्वाथन्तु दापयेत् ॥
क्वाथः सप्तविधः प्रोक्तः पाचनः शमनस्तथा ।
दीपनः क्लेदनो भेदी सन्तर्पणविशोषणः ॥
पाचनञ्च नरे देयं निशासु प्रविजानता ।
पूर्वाह्णे शमनो देयोऽपराह्णे दीपनः स्मृतः ॥
सन्तर्पणो भेदनश्च कल्ये पानाय दापयेत् ।
मोहनोऽपि प्रभाते च क्वाथः पाने प्रकीर्त्तितः ॥
रात्रौ यः प्रथमो यामो भूतवेला प्रकीर्त्तिता ।
द्वितीयं निशिरित्याहुर्निशीथश्च ततः परम् ॥
गुणरात्रं ततो ज्ञेयं कल्यमप्रातराशिनम् ।
पूर्वापराह्णमध्याह्नाः परार्द्धदिनशेषकाः ॥
पूर्वे दिनावसाने च भेषजानामुपक्रमः ।
पाचनो दीपनीयश्च शोषणः शमनस्तथा ॥
तर्पणः क्लेदनः शोषी क्वाथः सप्तविधः स्मृतः ।

पाचनोऽष्टावशेषो स्याच्छोधनो द्वादशांशकः ॥
क्लेदनश्चतुरंशश्च शमनोऽष्टावशेषितः ।
दीपनीयो दशांशस्तु तर्पणश्च समांशकः ॥
विशोषो षोड़शांशश्च क्वाथभेदाः प्रकीर्त्तिताः ।
पाचनः पचते दोषान् दीपनो दीप्यतेऽनलम् ॥
शोधनो मलशोधी स्यात् शमनः शमते गदान् ।
तर्पणस्तर्पते धातून् क्लेदी हृत्क्लेदकारकः ॥
विशोषो शोषमाधत्ते तस्मात् क्वाथं परीक्षयेत् ।
क्लेदी विशोषी विज्ञाय वमनं कारयेन्नरम् ॥
न लङ्घयेत् क्वाथकृतं नान्तराणि च चालयेत् ।
न शोषयेत् पुनः स्थाप्यो नाशुचौ न च कामते ॥
स च क्वाथो न शस्तः स्याद्रोगसङ्करकारणम् ।
न शोषयेत् पुनः क्वाथं न च भूमिगतं पुनः ॥
दोषसंशमने नैते प्रशस्ता गदकर्मणि ।
विदीर्य्यते पततेऽपि स्फुटते क्वाथतो जलम् ॥
एतेऽनिष्टकराः क्वाथा न दोषशमनाय च ।
एतैर्विलक्षणैर्हीनं क्वाथं दृष्ट्वा परीक्षयेत् ॥
कृष्णं नीलं घनं रक्तं पिच्छिलं शिथिलञ्च यत् ।
दग्धं कुणपगन्धञ्च विस्रगन्धं विवर्जयेत् ॥
एतैरसाध्यं जानीयात् रोगिणं नात्र संशयः ।
द्रव्यगुणानुवर्णेन द्रव्यगन्धं विनिर्दिशेत् ॥
तद्वद्विशुद्धं संच्छायं कषायममृतोपमम् ।
वातज्वरे लङ्घनान्ते दत्त्वा चान्नं तथोपरि ॥
निशासु पाचनं देयं ज्ञात्वा दोषबलाबलम् ।
त्रिरात्रात् पैत्तिके देयं श्लेष्मके प्रथमेऽहनि ॥
अविज्ञाते च दोषे च पाचनं न प्रदापयेत् ।

सप्तरात्राद्धि मर्य्यादा ज्वरेणैवोपलक्ष्यते ॥
तस्मान्नवज्वरे पीतं दोषकृन्न च दोषहृत् ।
तस्मादादौ प्रदेयन्तु पाचनञ्च दिनत्रयम् ॥
शमनीयं प्रदेयन्तु पञ्चरात्रं ततःपरम् ।
शोधनं दीपनीयन्तु एकरात्रं प्रदापयेत् ॥
क्वाथपाने क्लमो मूर्च्छा वैकल्यञ्च प्रदृश्यते ।
वमनञ्च यदा प्रोक्तं शमनं पथ्यकेऽपि वा ॥
सदा पथ्यं प्रयोक्तव्यं नापथ्येन स सिद्ध्यति ।
औषधेन विना पथ्यैः सिद्ध्यते भिषगुत्तमैः ॥
विना पथ्यं न साध्यः स्यादौषधानां शतैरपि ।
ज्वरितोऽहितमश्नीयाद् यद्यप्यस्यारुचिर्भवेत् ॥
अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽपि वा ।
स क्षीणः कृच्छ्रतां याति यात्यसाध्यत्वमेव च ॥
तस्माद्रक्षेद्बलं पुंसां बलमेव हि जीवितम् ।
लङ्घिते चैव दोषे च यवागूपानमाचरेत् ॥
शालिषष्टिकमुद्गञ्च यूषं शस्तं वदन्ति हि ।
पञ्चकोलकसंसिद्धा यवागूर्मध्यलङ्घिते ॥
पांशुधाने यथा वृष्टिः क्लेदयत्यतिकर्दमम् ।
तथा श्लेष्मणि संवृद्धे यवागूः श्लेष्मवर्द्धिनी ॥
भवेत् प्रशस्तं सततं तस्य सन्तर्पणं हितम् ।
आजं दुग्धं गुड़ोपेतं पानाय ज्वरशान्तये ॥
तेन क्लमविनाशः स्यात् सुखमाशु प्रपद्यते ।
उदीच्याभिमुखं पूर्वाभिमुखं वोपवेशयेत् ॥
पाययेत् क्वाथपानञ्च कृत्वा ब्राह्मणवाचनम् ।
पानपात्रमधः कृत्वा शयीतोत्तानमेव च ॥
पीत्वा चैव तृषार्त्तोऽपि न जलं पाययेत् क्षणम् ।

गतक्लमं नरं दृष्ट्वा तदा सम्पद्यते सुखम् ॥

इति श्रीमदात्रेयर्षिविरचिते हारीतोत्तरे तृतीयस्थाने भेषज परिज्ञानविधिर्नाम प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

आत्रेय उवाच ।

अनभिज्ञश्चिकित्सायां शास्त्राणां पठनेन किम् ।
यथा पुलाको बीजैस्तु रहितो निष्प्रयोजकः ॥
वरमाशीविषविषं क्वथितं ताम्रमेव च ।
पीतमत्यग्निसन्तप्ता भक्षिता वाप्ययोगुडाः ॥
न तु श्रुतवतां वेशं बिभ्रति शरणागताः ।
गृहीतुमन्नपानं वा वित्तं वा रोगपीड़ितात् ॥
तदेव युक्तं भैषज्यं यदारोग्याय जायते ।
स चैव भिषजां श्रेष्ठो रोगिभ्यो यो विमोचयेत् ॥
तस्मात् सर्वप्रयत्नेन रोगवारणहेतुना ।
युक्ता निदानलक्षैस्तु संहिता पाठसंयुता ॥
पठितव्या समासेन संहिता ज्ञानहेतवे ।
ज्ञात्वा रोगप्रतीकारं ततः कुर्य्यात् प्रतिक्रियाम् ॥
अविज्ञाय रुजं सम्यक् मोहादारभते क्रियाः ।
विधानज्ञोऽथ शास्त्रज्ञो न सा सिद्धेः प्रजायते ॥
निदानं रोगविज्ञानं भेषजानां गुणागुणम् ।
विज्ञाय कुरुते यस्तु तस्य सिद्धिर्न दूरतः ॥
आदावेव रुजां ज्ञानं साध्यासाध्यं विचक्षणः ।
याप्य सर्वरुजाश्चैव ततः कुर्य्यात् प्रतिक्रियाम् ॥
देशं कालं वयो वह्निं सात्म्यं प्रकृतिभेषजम् ।

एवं विज्ञाय सद्वैद्यस्ततः कुर्य्यात् प्रतिक्रियाम् ॥
नास्ति रोगो विना दोषैर्दोषा वातादयः स्मृताः ।
ज्वरादयः स्मृताः रोगास्तान् सम्यक् परिलक्षयेत् ॥
आप्तानां चोपदेशेन प्रत्यक्षीकरणेन च ।
आतुरादिदृशा स्पर्शात शीतादिप्रश्नतः परम् ॥
कृच्छ्रयाप्यः सुखोपायो द्विविधः साध्य उच्यते ।
असाध्यो द्विविधो ज्ञेयो याप्यः कृच्छ्रतमोऽपरः ॥
याप्याः केचित् प्रकृत्यैव केचित् याप्या उपेक्षया ।
स्वभावाद्व्याधयः साध्याः केचित् साध्या उपेक्षिताः ॥
साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा ।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ॥
व्याधेरुपरि यो व्याधिः सोपद्रव उदाहृतः ।
सोपद्रवा न जीवन्ति जीवन्ति निरुपद्रवाः ॥

ज्ञात्वाल्पकोऽपि भिषजा परिचिन्तनीयो
नोपेक्षणीय इति रोगगणो ह्यसाध्यः ।
स्वल्पोऽपि शत्रुविषवह्निसमानरूप-
श्चोपेक्षितो न शमतामुपयाति काले ॥

शत्रुः स्थानबलं प्राप्य विक्रमं कुरुते बली ।
उपेक्षणं तथा प्राप्य विक्रमं कुरुते गदः ।

बहुविधपरिकर्मणापि नीतं शमं यत्
कृशमपि हि न धार्य्यं रोगमूलं विधिज्ञैः ।
कथमपि बहुपथ्यैर्व्याहतो वा बलिष्ठो
न शमयति हि रोगं बाल्यमात्रेण सम्यक् ॥

यथा स्वल्पं विषं तीव्रं यथा स्वल्पो भुजङ्गमः ।
यथा स्वल्पतरश्चाग्निस्तथा सूक्ष्मोऽपि रुग्रिपुः ॥
यावत् स्थानं समाश्रित्य विकारं कुरुते गदः ।

तावत्तस्य प्रतीकारः स्यानत्यागाद्दलीयसः ॥
कर्मजा व्याधयः केचिद्दोषजा सन्ति चापरे।
सहजाः कथितास्त्वान्ये व्याधयस्त्रिविधा मताः ॥
बहुभिरुपचारैस्तु ये न यान्ति शमं ततः।
ते कर्मजाः समुद्दिष्टा व्याधयो दारुणाः पुनः।
दोषजा वातपित्ताद्याः सहजाः क्षुत्तृषादयः ॥
स्माद्वक्ष्यामि चादौ ज्वरमतुलगदं वाजिनां कुञ्जराणाम्।
ष्ट्राणां वा पशूनां मृगमहिषखरोष्ट्रादिवानस्पतीनाम् ॥
मीनानामापधीना चितिधरफणिनां पक्षिणां मूषिकाणाम्।
प्र प्राणापहारी ज्वर इति गदितो दुर्निवारो हि लोके ॥
असाध्योऽयं ज्वरो व्याधिर्गोमहिष्यश्वकुञ्जरे।
किञ्चित् कृच्छ्रतमो नृणामन्यथा जीवघातकः ॥
था मृगाणां मृगयुर्बलिष्ठस्तथा गदानां प्रबलो ज्वरोऽयम्।
न्योऽपि शक्तो मनुजं विहाय सोढुं भुवि प्राणभृतः सुराद्याः ॥

अथ ज्वरकारणमाह।

कर्मणा लभते यस्माद्देवत्वं मानुषो दिवि।
ततश्चैव च्युतः स्वर्गान्मानुष्यमभिवर्त्तते ॥
तस्मात् स दैवभावात्तु सहते मानुषो ज्वरम्।
शेषाः सर्वे विपद्यन्ते पशुवर्गा ज्वरार्दिताः ॥
रोगाणां रोगराजोऽयं यथा मृगपतिर्मृगे।
दाहात्मसु यथा वह्निस्तथा रोगे ज्वरोऽधिकः ॥
रुद्रकोपाग्निसम्भूतः सर्वभूतप्रतापनः।
पातकः स तु नागानामभितापस्तु वाजिनाम् ॥
गवामीश्वरसंज्ञस्तु मानवानां ज्वरो मतः।
हारिद्रो महिषाणान्तु मृगरोगो मृगेषु च ॥
अजावीनां प्रलापाख्यः करभेष्वलसो भवेत्।

शुनोऽलर्कः समाख्यातो मत्स्येष्विन्द्रमदो मतः ॥
पक्षिणामभिघातस्तु व्यालेष्वैक्षितसंक्षितः ।
जलस्य नीलिका प्रायो भूमेरूषरनामतः ॥
वृक्षस्य कोटराक्षस्तु ज्वरः सर्वत्र दृश्यते ।
त्रिपाद्भस्मप्रहरणस्त्रिशिराः सुमहोदरः ॥
वैयाघ्रचर्मवसनः कपिलोज्ज्वलविग्रहः ।
पिङ्गलाक्षो ह्रस्वजङ्घो वीभत्सो बलवानयम् ॥
पुरुषो लोकनाशाय चासौ ज्वर इति स्मृतः ।
दग्धेन्धनो यथा वह्निर्धातून् हत्वा यथा विषम् ॥
कृतकृत्यो व्रजेत् शान्तिं देहं हत्वा तथा ज्वरः ।
तस्मात्तस्य समुत्पत्तिं वक्ष्यामि शृणु पुत्रक ! ॥
चतुर्विधो महाघोरो जातो येन तु चाष्टधा ।

दक्षाध्वरप्रशमनः कुपितो हि महेश्वरः ॥
श्वासं मुमोच दयिताविधुरोऽतितीव्रं
तेन ज्वरोऽष्टविधसम्भवतोऽष्टधा स्यात् ।
वातादिपित्तकफशोणितसन्निधानात्
स्वेच्छान्नपाननिरताहतुवैपरीत्यात् ॥
दोषा मलाशयगता जठराग्निबाह्याः
संप्रेरयन्ति रुधिराश्रितवह्निपातम् ।
तेषां ततो हि दधते ज्वरनाम सिद्धं
व्यायामरोषजननाच्छ्रतसम्भवत्वात् ॥
विरुद्धान्नविशेषेण पाननिर्झरवारिणा ।
कूपोदकेन सन्तुष्टस्तिग्मतीव्रांशुरश्मिभिः ॥

गन्धवातेन दोषाणाम् अभिघाताभिशापतः ।
ज्वरो नाम महाघोरो जायते मनुजे भृशम् ॥
पूर्वरूपं ज्वराणान्तु सामान्यात्तु विशेषतः ।

जृम्भाङ्गमर्दभूयिष्ठं हृदयोद्वेगि वातजम्॥

श्वासो जडत्वं नयनप्लवः स्याद्रोमोद्गमो घुर्घुरकश्च जृम्भा।
वैवर्णता चापि सशोषतास्ये ज्वरस्य च व्यक्तकलक्षणानि॥

समीरणे च वै जृम्भा कफाद्दैन्यं निषीदति।
पित्तान्नयनसन्तापः सर्वं वै सान्निपातिके॥
तस्माद्दद्यात् प्रतीकारं येन सम्पद्यते सुखम्।

ाथा यवानी धनिका-सविश्वा कषायं पिवेत् निशि सोष्णमेव।
नवार्तिके वातगदे ज्वराणां सम्पाचके स्यान्मनुजे सुखाय॥

नेशा सनिम्बा मृतवल्लिका च धान्यञ्च विश्वा सगुडः कषायः।
नेशासु च चोर सकोलमिश्रं पानं सपित्तज्वरपाचनाय॥

ाचा यवानी त्रिफला सविश्वा क्वाथो निशायां कफजे ज्वरे वा।
पाचन स्यान्मनुजस्य दोषे शूले प्रतिश्यायकपीनसेषु॥

ाठीवचानागरकाफलानां वत्सादनीधन्वयवासकानाम्।
ाथो हितः सर्वभवे ज्वरे च सम्पाचनं स्यान्मनुजस्त्रिदोषे॥

रात्रौ सुखोष्णतोयेन प्रचुरेण च धीमताम्।
अङ्गसंमर्दनं पथ्यं निद्राव्यायामवर्जितम्॥

अथ ज्वरचिकित्सा।

ापथ्यविषमवेगशोषणं कण्ठतालुवदने विरस्यता।
ःक्षता चास्थिषु तोदनं चयो जृम्भणं शिरसि रुग्विनिद्रिता॥
ष्णता कररुहां प्रलापको गात्रभङ्ग दलितो वीभत्स्यति।
ीतवत् स्वपिति जाग्रतो नरो लक्षणैर्भवति वातकृत् ज्वरः॥

ागरं सुरतरुश्च धान्यकं कुण्डली बृहतिकायुगं निशिः।
ासमे निशि प्रशस्यते ज्वरे चास्थिमांसगतकोहि चोष्णवान्॥

सर्वज्वरे विहितमेव महौषधाद्यं
वीर्य्याधिकं भवति भेषजमन्नहीनम्।

हन्यात्तदामयमसंशयमाशु चैव
तद्वालवृद्धयुवतीमृदुभिश्च पित्त
ग्लानिं परां नयति चाशु बलक्षयश्च ॥
इन्द्रियाणां लघुत्वञ्च नेत्रास्यस्य प्रमादता ।
मोद्गारमुष्णता कोष्ठे जीर्णे भेषजलक्षणम् ॥
क्लमहृल्लासमदनं शिरोरुक् भ्रंशमेव च ।
उत्क्लेदो जायते यस्य विद्यादुत्क्राममौषधम् ॥
दाहाङ्गमदनं मूर्च्छा शिरोरुक् क्लमदीनता ।
भ्रमो रतिविशेषेण सविशेषौषधाकृतिः ॥
तस्मादौषधशेषे च न दोषशमनं क्वचित् ।
कुप्यन्त्यनेकधा दोषा न देयं पाचनैर्विना ॥
शीघ्र विपाकमुपयाति बलं निहन्या
द्वन्नातुरं न च मुहुर्वदनान्निरेति ।
प्रागभुक्तसेवितमहौषधमेतदेव
दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः ॥
बिल्वाग्निमन्थशुकनाशक-पाटलीना
कुम्भारिका प्रतियुतं क्वथितं कषायम् ।
दत्तात् विशोधयति निवारयते समीर
नाशं करोति मरुतज्वरमाशु पुंसाम ॥
रास्ना वृचादनी दारु सरलं सैलवालुकम् ।
क्वाथं सगुड़सपिप्पलं पिबेद्वातज्वरापहम् ॥
किरातमुस्तमृतवल्लिकणा सविश्वा
गोकण्टको वृहतियुग्मसुदीर्घ्यतिक्ताः ।
स्यात् शालिपूर्णकलसीक्वथितः समन्तात्
क्वाथः समीरणभवं ज्वरमाशु हन्ति ॥
गुडूची शतपुष्पा च प्लक्षो रास्ना पुनर्नवा ।

त्रायमाणाकषायश्च गुड़ैर्वातज्वरापहः॥

इति वातज्वरचिकित्सा।

मूर्च्छा दाहो भ्रममदतृषा वेगतीक्ष्णोऽतिसार-
स्तन्द्रालस्यं प्रलपन वमिः पाकताल्वोष्ठवक्त्रे।
स्वेदःश्वासो भवति कटुकं विह्वलत्वं क्षुधा वा
एतैर्लिङ्गैर्भवति मनुजे पैत्तिको वै ज्वरस्तु।
गोधोत्पलामृतलताकमलं सिताढ्यं
तत् सारिवासहितमेव हि पाचनेषु।
निःक्वाथ्य पानमति चाशु निहन्ति पित्तं
पित्तज्वरप्रशमनं प्रकरोति पुंसाम्॥

क्वथितं तण्डुलपयसा शक्राह्वकटुरोहिणीसहितम्।
क्वाथं यष्टीमधुना विनाशनं पित्तज्वराणान्तु॥

दुरालभावासकपर्पटानां प्रियङ्गुनिम्बकटुरोहिणीनाम्।
किराततिक्तं क्वथितं कषायं सशर्कराढ्यं कथितञ्च पाचनम्॥
सदाहपित्तज्वरमाशु हन्ति तृष्णाभ्रमं शोषविकारयुक्तम्।
एकोऽपि वै पर्पटको वरिष्ठः पित्तज्वराणां शमनाय योग्यः।
तस्मात् पुनर्नागरवालकाढ्यः सिंहो यथा कङ्कटके प्रवृत्तः॥

नागरोशीरमुस्ता च चन्दनं कटुरोहिणी।
धान्यकानां तु क्वाथश्च पित्तज्वरविनाशकः॥
अमृता पर्पटो धात्री क्वाथो पित्तज्वरं हरेत्।
सितारग्वधयोर्वापि काश्मर्य्या चाथवा पुनः॥
द्राक्षापर्पटकं तिक्ता पथ्यारग्वधमुस्तकैः।
क्वाथस्तृषाभ्रमदाहयुक्तपित्तज्वरापहः॥

विदारिकारोध्रदधित्थकानां स्याम्मातुलुङ्गस्य च दाड़िमानाम्।
यथानुलाभेन च मूलपत्रं निहन्ति तृट् दाहसमूर्च्छनञ्च॥

उत्तानस्य प्रसुप्तस्य कांस्यं वा ताम्रभाजनम्।

नाभौ निधाय धाराम्बु शीतदाहं निवारयेत् ॥
रम्यारामाकुचभरनमितालिङ्गनं चेष्टसङ्ग-
श्चव्यायामं मुनिवरगदितं शीतलं सेवनं स्यात् ।
शुभ्राम्भोजं मलयजजलासिक्तसंशीतवासो
मुक्ताहारो विशदतुहिनं कौमुदीया सुखाय ॥
एभिर्हन्ति द्रुततरनिभं मानुषाणां तु पित्तम् ।
दाहं शोषं क्लममपि तथा तृड्भ्रमं मूर्च्छनञ्च ॥
एतैर्योगैर्भवति नितरां पित्तदाहस्य शान्ति
र्योग्या चैव प्रभवति सततं सत्क्रिया श्रीमताञ्च ।
यदि जिह्वागलतालुशोषो वै मनुजस्य च ॥
केशरं मातुलुङ्गस्य मधुसैन्धवसंयुतम् ।
पेष्यमाणं तालुलेपे सद्यः पित्तज्वरापहम् ॥

इति पित्तज्वरचिकित्सा ।

स्तैमित्यं मधुरास्यता च जड़ता निद्रा च तन्द्रा भृशं
गात्राणां गुरुता रुचिर्विरमता रोमोद्गमः शीतता ।
प्रस्वेदः श्रुतिबाधनञ्च कुरुते नेत्रे च पाण्डुच्छवी
विष्टब्धा मलवृत्तिका च वमनं श्लेष्मज्वरे तं विदुः ॥
पिप्पल्यादिषु कल्कन्तु कफजे पाचनं हितम् ।
तद्वद्व्याघ्री च सिंही च रोध्र कुष्ठपटोलकम् ।
ज्वरे कफात्मजे चेतत् पाचनं स्यात्तदुत्तमम् ॥
वासागुडूची त्रिफला पटोली शठी च तिक्ता मधुना कषायम्
श्लेष्मप्रभूतेषु रुजेषु सम्यक् ज्वरं निहन्यात् कफजञ्च शीघ्रम् ॥
आमलक्यभयाकृष्णा षड्ग्रन्था चित्रकं तथा ।
मलभेदिकफातङ्कज्वरनाशनदीपनः ॥
पिप्पली शृङ्गवेरञ्च षड्ग्रन्था वत्सकं फलम् ।
क्वाथो मधुप्रगाढ़ः स्यात् श्लेष्मज्वरविनाशनः ॥

क्षौद्रेण पिप्पलीचूर्णं लिह्यात् श्लेष्मज्वरापहम्।
प्लीहानाहविबन्धार्त्तिकासश्वासविमर्दनम्॥

इति श्लेष्मज्वरचिकित्सा।

तृष्णा मूर्च्छा वमिरथ कटुकं चानने रूक्षता स्यात्
अन्तर्दाहो वपुषि नयने पीतता कण्ठशोषः।
निद्रानाशःश्वसनशिरसोरुक् प्रभेदोऽङ्गभङ्गो
रोमोद्धर्षं तमकमिति चेद्वातपित्तज्वरः स्यात्॥

संसृष्टदोषैर्विहितञ्च सम्यक् विपाचनं पित्तमरुज्ज्वरे च।
फलत्रिकं शाल्मलिसंप्रयुक्तं रास्ना किरातस्य पिबेत् कषायम्॥
द्विपञ्चमूली सह नागरेण रास्नाकिरातस्य पिबेत् कषायम्।
द्विपञ्चमूली सह नागरेण गुडूचिभूनिम्बघनैः समेता॥
कल्कः प्रशस्तः सगुडो मरुत्सु सपित्तवातज्वरनाशहेतुः।
किराततिक्तामलकीशटीना द्राक्षापटोलाभयकामृतानाम्॥
क्वाथः सुशीतो गुडसंयुतः स्यात् सपित्तवातज्वरनाशहेतुः।
मसूरिकानाशनकं जलेन द्राक्षाबलाकिञ्जलकस्य च रास्ना।
सत्रायमाणा क्वथितोऽपि यूषो मरुत्सपित्तज्वरनाशहेतुः।
अमृतामुस्तकं वासा पर्पटं विश्वजलेन क्वाथः।
पानं पित्तमरुत्सु ज्वरं निहन्याच्च भद्रमुस्ताः॥

इति वातपित्तज्वरचिकित्सा।

निद्रागौरवगात्रसन्धिशिरसश्चार्त्तिस्तथा पर्वणाम्
भेदो मध्यमवेगता नयने वातान्विते श्लेष्मणि
सन्तापः श्वसनं रुचिः श्रुतिपथे कण्ठे च शुष्कावृतिः
स्तन्द्रामोहमरोचकभ्रममथ श्लेष्मज्वरे पित्तले॥
किरातं पर्पटं मुस्तं गुडूचीं विश्वभेषजम्।
पित्तश्लेष्मज्वरे कुर्य्यात् पाचनं ज्वरनाशनम्॥
नागरं भद्रमुस्ता वा गुडूच्यामलकान्वितम्।

पाठामृणालोदीच्याश्च क्काथः पित्तज्वरे कफे ।
पाचनो दीपनीयः स्यात् रक्तशोषनिवारणः ॥

द्राक्षामृतावासककारिष्टकानां भूनिम्बतिक्तेन्द्रयवाः पटोलम् ।
मुस्ता सभार्गी क्कथितः कषायः सपित्तश्लेष्मज्वरनाशनाय ॥

गुडूचिकानिम्बदलानि शुण्ठी मुस्तश्च कुस्तुम्बरुचन्दनानि ।
क्काथं विदद्यात् कफपित्तजातज्वरं निहन्याच्च गुडूचिकाद्यः ॥

एष सर्वज्वरान् हन्ति हृल्लासाद्यानरोचकान् ।
प्रतिश्याय पिपासाश्च शोषदाहनिवारणः ॥

गुडूचिकानिम्बकवासकश्च शठी किरातं मगधा बृहत्यौ ।
दार्वी पटोलं क्कथितं कषायं पिबन्नरः पित्तकफे ज्वरे च ॥

पटोलो चन्दनं तिक्ता मूर्वापाठामृतागणः ।
पित्तश्लेष्मज्वरच्छर्दि दाहकण्डूनिवारणः ॥

पटोलवासापिचुमर्दकस्य दलानि यष्टीमधुकं बला च ।
कषाय एतत्परिसाधितस्तु ज्वरे कफे पित्तभवे प्रशस्तः ॥

स दीपनो वातकफात्मके च तथैव पित्तासृजसम्भवे च ।
ज्वरे मलानां प्रतिसेदनः स्यात् ज्वरे च वाताश्रितके प्रशस्तः ॥

इति पित्तश्लेष्मज्वरचिकित्सा ।

शीतं वेपथुपर्वभङ्गमथगौरवं जडत्वं रुजा
मन्दोष्णारुचिवमनं प्रलपता कासस्तमः शूलवान् ।
तन्द्रा कूजनसात्म्यगौरवमथो स्तैमित्यजृम्भारुचि
प्रस्वेदो मलमूत्ररोधसहितः स्यात् श्लेष्मवातज्वरः ॥

आरग्वधस्तिक्तकरोहिणी च हरीतकी पैप्पलमूलमुस्ता ।
निःक्काथ्य कल्कः कफवातयुक्ते ज्वरे सशूले हितपाचनोऽयम् ॥

इति आरग्वध पञ्चकम् ।

मुस्तागुडूची सह नागरेण वासाजलं पर्पटकश्च पथ्या ।

क्षुद्रा च दुस्पर्शयुतः कषायः पाने हितो वातकफज्वरस्य ॥

इति क्षुद्राद्यं पाचनम् ।

पर्पटनागाख्य-वचा-तन्तुककट्फलैलाभया विश्वभूतिकैः ।
क्वाथो हिङ्गुमधुयुतः कफवाते महिक्कारोगे सगलग्रहे च ॥
द्विपञ्चमूलकः क्वाथः कणाचूर्णेन भावितः ।
देयो वातकफे शूले ज्वरे श्वासे च पीनसे ॥

इति वातकफज्वरचिकित्सा ।

तन्द्रालस्यं मुखमधुरता ष्ठीवनं कण्ठशोषो
निद्रानाशःश्वसनविकलो मूर्च्छना शोचना च ।
जिह्वजाड्यं परुषमथवा पृष्ठशीर्षे व्यथा स्यात
अन्तर्दाहो भवति यदि वा विद्धि दोषं त्रिदोषम ॥
दृष्ट्वा त्रिदोषजं घोरं ज्वरं प्राणापहारकम ।
तस्मादादौ [illegible] शोधनं परिकीर्त्तितम ॥
न कुर्य्यात् [illegible] यदीच्छेदात्मनो यशः ।
कफ[illegible] सद्यो हन्ति रुजातुरम ॥
[illegible] वमनं वापि ष्ठीवनं स्यात् त्रिदोषजे ।
त्रिरात्रं [illegible] वा सप्तरात्रमथापि वा ॥
लङ्घनञ्च समुद्दिष्टं ज्ञात्वा दोषबलाबलम ।
कफं विशोधितं ज्ञात्वा ततो वातनिवारणम ॥
पित्तसंशमनं कार्य्यं ज्ञात्वा पित्तस्य कोपनम् ।
शोधनीयौ वातकफौ न तु पित्तं विनाशयेत् ॥

इति त्रिदोषचिकित्सा ।

[illegible]ण्यामूलस्य शोषं श्वसनमथ निशाजागरो वामरस्तु
[illegible]न्द्रा मोहश्च शोषो भवति हि वदने घ्राणजिह्वाधराणाम् ।
[illegible]ाकं निष्ठीवते यः क्षततनुश्च भवेन्मण्डलानां च देहे
[illegible]र्भ्रान्तिः स्रावनेत्राधरवदनमदस्वेद आध्मान [illegible] ॥

क्षुन्नाशो वा भ्रमणमपि तथा शिरसो लोठनं वा शिरोऽर्त्तिः
स्रोतोरोधो वमिर्वा गलकघुरघुरा शूलकैर्वा वृतस्तु।
एतैर्लिङ्गैः प्रयुक्तः प्रभवति च नृणां सन्निपातेतिसंज्ञा
रोगाणामाशुकारी ज्वर इति कठिनो वाजिनां वा द्विपानाम्॥

इति सन्निपातज्वरलक्षणम्।

सन्निपातज्वरे पूर्वं कुर्यात् वातकफापहम्।
पश्चात् श्लेष्मणि संक्षीणे शमयेत् पित्तमारुतौ॥
सन्निपातज्वरे यत्नं कृत्वा तन्द्रां जयेत् पराम्।
उपद्रवः कष्टतमो ज्वराणाञ्च विशेषतः॥
पथ्यं कारयते यस्तु रोगिणां कफपूरितम्।
स एव चास्य शत्रुः स्यात् न पथ्यं न च भेषजम्॥
शठी द्विपञ्चमूलकं दुरालभाभार्गीकुटजम्।
पटोलं पौष्करं वाथ युक्ता भार्गवी पिप्पली॥
निहन्ति सान्निपातिकज्वराग्निमान्द्यं दशाङ्गः।

इति दशाङ्गो नामक्वाथः

भूनिम्बदारुदशमूलमहौषधाब्द
तिक्तेन्द्रवीजधनिकेभकणाकषायः।
तन्द्राप्रलापकलथारुचिदाहमोह-
श्वासाग्निमान्द्ययुतमाशु रुजं निहन्ति॥
शुण्ठीघनागजकणासुरदारुधान्या-
तिक्ता कलिङ्गदशमूलसमोऽपि कल्कः।
श्रेष्ठस्त्रिदोषजनितज्वरनाशनाय
श्वासभ्रमारुचि-विबन्ध हृदामयघ्नः॥
मुस्तोशीरनिशाविशालमधुकं पाठावला रोहिणी
नीलीवन्ययवानकट्फलशठीशुण्ठी समङ्गा त्रिवृत्।

यष्टी पैप्पलमूलपर्पटफलं पिप्पल्यकं दारु च
श्यामा हैमगुडूचिका समपय: क्वाथो ज्वरान्त: स्मृत: ॥
द्वौ वृहत्यौ शठी शृङ्गी किरातं कटुरोहिणी।
पटोलं पौष्करं भार्गी वत्सकं च दुरालभा ॥

एतत् वृहत्यादिकपाचनं स्यात् कासादिकोपद्रवनाशनञ्च।
शीघ्रं निहन्ति ज्वरसन्निपातं शूलार्त्तितन्द्राशमने प्रशस्तम् ॥

इति वृहत्यादि पाचनम्।

शठी किरातं कटुका विशाला शृङ्गी गुडूची वृहतीद्वयञ्च।
महौषधं पौष्करधन्वयासरास्ना सुराह्वा गजपिप्पली च ॥
पीतन्तु नि:क्वाथ्य हितं नराणां शठ्यादि चातुर्दशकं प्रशस्तम्।
जघान तन्द्राश्वसनं शिरोऽर्त्तिं जाड्य सशूलं ज्वरमाशु हन्ति ॥

इति शठ्यादिपाचनम्।

भूनिम्बं सुरदारुनागरघनातिक्ताकलिङ्गानि च
तद्वद्धस्तिकणा द्विपञ्चकगणैर्युक्त: कषायो हित:।
पीत: सर्वरुजां विनाशनकर: स्यात् सन्निपातज्वरं
हन्ति श्वासविशोषवर्चसि रुजं तन्द्रां जघान द्रुतम् ॥

रास्ना गुडूची घनपर्पटकं पटोली
भूनिम्बवत्सकशठीयुतनागराणाम्।
तिक्ता सुराह्वगजमागधिकायवासा
वासावलागजकणाक्वथित: समांश: ॥
क्वाथो निहन्ति मरुत: प्रभवामयानां
सश्वासकासजठरार्त्तिविसूचिकानाम्।
श्रेष्ठो नरस्य भुवि पाचनकस्त्रिदोषे
रोगेऽथवा कफसमीरणके प्रदेय: ॥

इति वृहद्रास्नादि:।

रास्नामृतिकण्टकशतान्हमहौषधिश्च
भार्गी सपुष्करवनासुरदारुधान्याः ।
क्वाथो हितः सकलमारुतजित् ज्वरेषु
स्यात् सन्निपातजनितप्वतिदारुणेषु ॥

इति लघुरास्नादि

त्रिवृद्विशाला च तथा सुराह्नमारग्वधं तिक्तकरोहिणी च ।
क्वाथो भवेद्भेदनको मलानां स्याद्वातशूलेन यतोभयघ्नः ॥

इति त्रिवृतादिमलभेदनः

इदानीं सन्निपातप्रस्वेदोद्धूलनं कथ्यते ।

वचा यवानी च महौषधञ्च शुष्कञ्च चूर्णं तनुलेपनाय ।
शस्तं वदन्ति ज्वरवमशान्त्यै करोति नूनं परिमर्दनञ्च
मागध्यनागरसुरद्रुम एलदार्वी
तिक्ता च टोप्यकयुता तनुलेपनाय ।
चूर्णं प्रशस्तमपि वारयते शरीरे
स्वेदञ्च शीतलतनुर्भवतीह नूनम् ॥

इति सान्निपातिकस्वेदोद्धूलनम्

मधूकसारं सहौषधेन वचोषणा सैन्धवसयुता च ।
मूत्रेण वा चोष्णजलेन पिष्ट प्रनष्टज्ञानप्रतिबोधनाय ॥
शोभाञ्जनकमूलस्य रसं समरिचान्वितम ।
विसंज्ञितानां नस्यं स्याद्बोधनं चाशु रोगिणाम् ॥

इति नस्यविधानम्

एकं बृहत्याः फलपिप्पलीकं शुण्ठीफृतं चूर्णमिदं प्रशस्तम् ।
प्रधामयेद्घ्राणपुटे तु संज्ञां चेष्टां करोति क्षवथुः प्रबोधः ॥

इति प्रधमनविधि

शिरीषवीजं मरिचोपकुल्या मूत्रेण घृष्टं सह सैन्धवेन ।
नेत्राञ्जनं स्यान्नयने नराणां प्रनष्टसंज्ञस्य करोति बोधम् ॥

त्रिकटुकरञ्जवीजं त्रिफला सुरदारुसैन्धवम्।
तुलसीवर्त्तिनयनाञ्जनकं तन्द्रानाशं करोति नयनानाम्।

इति नेत्राञ्जनविधिः।

केशरं मातुलुङ्गस्य शृङ्गवेरं ससैन्धवम्।
संयोज्य त्रिकटुं तत्र आकण्ठाद्धारयेन्मुखे॥
दन्तजिह्वा मुखं तालुघर्षणं कारयेद्बुधः।
कुर्य्यान्निष्ठीवनं सर्वं वारं वारं विधानतः॥
तेन कण्ठविशुद्धिः स्यात् श्लेष्माणं चापकर्षति।
जिह्वापटुत्व रुचिकृत् कासः श्वासश्च शाम्यति॥
त्रिकटुश्चव्यका पथ्याचूर्णं सैन्धवसंयुतम्।
तेन दन्तांस्तथा जिह्वां घर्षयेत्तालुकामलम्॥
निष्ठीवनं तालुशुद्धि रुचिकृत् कफसूदनम्।
हृल्लासनाशमाप्नोति पटुत्वं कुरुते भृशम्॥

इति निष्ठीवनविधिः।

यदि वा शीतगात्रे च तदा स्वेदो विधीयते।
स्वेदास्त्रयोदशाः ज्ञेयाः स्वेदवारणकारणाः॥
शङ्करः प्रस्तरो नाड़ी परिषेकोऽवगाहनः।
आतङ्कोऽश्मघनः कर्षः कुटी भूकुम्भिरेव च॥
कूपो होलाक इत्येते स्वेदयन्ति त्रयोदशाः।
कालस्वेदं घटीस्वेदं वालुकास्वेदमेव च॥
कारयेत् हस्तपादाभ्यां तथा शिरसि चातुरे।
एवं न शान्तिर्यदि वा दहेल्लोहशलाकया॥
पादौ दग्धेन लौहेन दहेद्वाङ्गुष्ठमूलके।
तथाच मणिबन्धे च हृदि मूर्द्धि तथापि वा॥
...ो ललाटे हि तथा नरस्य शीतार्दितस्यापि सपिच्छलस्य।
...ठस्थितो यस्य न याति वह्ने नूनं समभ्येति गृहं हि मृत्योः।

पवनकफयुतं वा पित्तमेतत् ज्वरस्य
दशमदिवसतो वा सप्तमे द्वादशे वा।
मृतिमपि कुरुते वा मोचनं वा यथा स्यात्
हिततरमपि युक्तं कारकं वै त्रिदोषे॥

सप्ताहे वा दशाहे वा द्वादशाहेऽथवा पुनः।
त्रयोदशे पञ्चदशे प्रशमं याति हन्ति वा॥
अथ पञ्चदशाहे वा हन्ति रक्षति मानवम्।
सन्निपातो महाघोरो ज्वरः कालाग्निसन्निभः॥
सप्तमी द्विगुणा या तु नवम्येकादशी तथा।
एषा त्रिदोषमर्य्यादा मोक्षाय च वधाय च॥
सन्निपातस्य दोषस्य नरस्यास्य भिषग्वर!।
सन्निपातेऽन्तर्दाहे मनुजं यः शीतवारिणा सिञ्चेत्।
आतुरः कथमपि जीवेद्वैद्यश्चासौ कथं पूज्यः॥

यः सन्निपातजलधौ पतितं मनुष्य
वैद्यः समुद्धरति किन्न कृतं नु तेन।
धर्मेण वाथ यशसा विनयेन युक्तः
पूजाञ्च कां भुवि तले न लभेत् तु वैद्यः॥

इति सन्निपातज्वरचिकित्सा।

वातपित्तकफैर्युक्तः प्रदाहः स्यात्त्रिदोषजः।
स च रक्तेन संयुक्तो ज्वरः स्यात् सान्निपातिकः॥
न रक्तेन विना विद्धि ज्वरं वै सान्निपातिकम्।
क्वाथैः पाचनकैर्दोषाः प्रशमं यान्ति मानवे॥
तस्मात् प्रशमिते दोषे रक्तं नैव विलीयते।
तेनैव जायते शोथः कर्णमूले तु दारुणः॥
तस्मात्तस्य प्रतीकारं कुर्य्याद्रक्तविरेचनम्।
जलौकालावुशृङ्गैस्तु ततश्च लेपनं हितम्॥

बीजपुरकमूलानि अग्निमन्थस्तथैव च।
आलेपनमिदं चास्य कर्णमूलस्य नाशनम्॥

अङ्गारधूपरजनी समहौषधेन
सिद्धार्थसैन्धववचा पयसा विमर्द्य।
लेपो हितस्तस्य च रक्तविनाशकारी
शोफव्रणस्य शमनो मनुजस्य कर्णे॥

यदा पाको भवेत्तस्य कार्य्या तत्र प्रतिक्रिया।
धवार्जुनकदम्बत्वक् लेपनं व्रणरोहणम्॥
निम्बारग्वधमूलानां निशायुक्तं प्रलेपनम्।
स्रावणं पूयगन्धानां रोहणं स्याद्व्रणेषु च॥
वर्जयेच्च दिवास्वप्नं योषित्सङ्गं बहूदकम्।
जलं शीतं निशाजागं व्यायामं शोचनन्तथा॥
माषांश्च यवगोधूमतिलपर्णीकमेव च।
मसूरत्रिपुटांश्चैतान् तैलञ्च दूरतस्त्यजेत्॥
मामसिकं व्यवायञ्च पत्रैकं चातिभोजनम्।
वर्जयेत् कर्णमूली च सुखं तेनोपपद्यते॥
षष्टिकान्नं पुराणं वा अल्पं सर्षपमाढ़की।
कुलत्थमुद्गयूषं वा भोजने च प्रशस्यते॥
आर्द्रकं तण्डुलीयञ्च शतपुष्पा पटोलकम्।
कोषातकीद्वयं वापि कुष्माण्डानि प्रशस्यते॥
वार्त्ताकुञ्च पलाण्डुञ्च कन्दशाकान् परित्यजेत्।
एतेन सुखमाप्नोति शीघ्रं रोगाद्विमुच्यते॥

इति कर्णमूलविधिः।

अन्ते पित्तं यदा तिष्ठेत् वाह्ये श्लेष्मसमीरणौ।
तदान्तर्दाहशोषः स्यात् वाह्ये सस्वेदशीतता॥
तस्या सृतापयः क्वाथं मधुपिप्पलिसंयुतम्।

पाययेदाशु मुच्येत ज्वराद्वै सान्निपातकात् ॥
अथवातिविषा बालं नागरं घनपर्पटम् ।
क्वाथो वा शर्करायुक्तस्त्वन्तर्दाहोपशान्तये ॥
बाह्ये पित्तं यथा तिष्ठेदन्ते वा कफमारुतौ ।
तेनोष्णत्वं शरीरस्य शैत्यमन्ते च जायते ॥
तस्य शठ्यादिकं क्वाथं प्रयुञ्जीयात् कफापहम् ।
यस्योर्द्ध्वगौ वातकफावधोगं पित्तमेव च ॥
तेनार्द्ध्वं शीतलं गात्रमर्द्धे चोष्णञ्च जायते ।
तस्य रास्नादिकं क्वाथं प्रयुञ्जीयात्तथोष्णकम् ॥
यस्योर्द्ध्वं रक्तपित्तञ्च मध्ये वातकफावुभौ ।
तेनोर्द्ध्वं जायते चोष्णमधः शीतं प्रजायते ॥
तस्य शुण्ठ्यादिकं क्वाथं युञ्जीयात् भिषगुत्तमः ।
यस्योष्मा दृश्यते चापि मन्दतृष्णा च जायते ॥
बाह्यवेगं विजानीयात् ज्वरः साध्यो विजानता ।
यस्यान्ते जायते चोष्मा तृष्णा दाहः शिरोव्यथा ।
तृष्णाविह्वलता यस्य सोऽन्तर्वेगो भवेज्ज्वरः ।
यस्योच्छ्वासो भवेदुष्णो रक्तनेत्रोऽतिविह्वलः ॥
अन्तर्दाहो भवेद्यस्य शरीरं पुलकाङ्कितम् ।
रक्तमूत्रमरोचात्तं प्रलापं भ्रममेव च ॥
गम्भीरवेगं जानीयात् कृच्छ्रसाध्यं नृणामपि ।
तस्य कुर्यात् प्रतीकारं योगोऽष्टादशको नृणाम् ॥
अन्ते पित्तं यदा तिष्ठेद्देहे वातकफावुभौ ।
तेन शैत्यं शरीरस्य चोष्णत्वं करपादयोः ॥
तस्य रास्नादिकः क्वाथः प्रदेयः पिप्पलीयुतः ।
देहे पित्तं यदा तिष्ठेत् वाते वातकफावुभौ ॥
तस्योपजायते देहे शीतत्वं करपादयोः ।

तस्य द्राक्षादिकः क्वाथः प्रदेयो गुड़कान्वितः॥
यत्र यत्र भवेत् शैत्यं तत्र स्वेदो विधीयते।
नात्युष्णे स्वेदनं कुर्य्याद् ज्वरस्यास्य विजानता॥
कफपित्तेन निश्चेष्टो भवत्येवानिलः सदा।
तस्मादेवानिलाद्रोगाः संभवन्ति ज्वरादयः॥
भ्रमः शैत्यं विह्वलता कम्पो विड्भेदनं क्लमः।
श्रमः स्वेदो जल्पनञ्च ज्वरमोक्षे भवन्ति च॥
प्रस्वेदकण्डू च शिरा च पृष्ठा तथा मुखेषु क्षवथुर्लघुत्वम्।
अन्नाभिलाषो विपुलेन्द्रियञ्च गतक्लमो वीतरुजो मनुष्यः॥
विमुक्तस्यापि हि शिरोगुरुत्वं नैव मुञ्चति।
अविमुक्तं विजानीयात् ज्वरः पुनरुपैति तम्॥
यदि धातुगतश्चैव ज्वरो देहे प्रपद्यते।
विषमं तं विजानीयात् स च ज्ञेयश्चतुर्विधः॥
एकाहिको द्व्याहिकश्च त्र्याहिकश्च तथापरः।
वेलाज्वरश्चतुर्थोऽपि विजानीयात् विचक्षणः॥
शीतश्च पूर्वं भवति पश्चादुष्णं च जायते।
स साध्यो मनुजे प्रोक्तः शीघ्रं सिध्यति भेषजैः॥
यश्चादौ दाहमाप्नोति ज्वरो भवति दारुणः।
सोऽपि नो मुच्यते शीघ्रं ज्वरो धातुक्षयङ्करः॥
ग्वातपैत्ते च त्रिकोरुकय्यां स्यान्मस्तके रुग् भ्रम एव पैत्ते।
ष्ठे तनुश्लेष रुजाकरं स्यात् त्रिधा तृतीयज्वरलक्षणन्तत्॥
कफपित्तात्त्रिकग्राही पृष्ठं वातकफात्मकः।
वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः॥
वातात्मकः शिरोग्राही जृम्भाग्राही कफात्मकः।
पित्तात्मकस्त्रिकग्राही त्रिविधः स्यात्तृतीयकः॥

इति तृतीयकज्वरलक्षणम्।

चातुर्थो द्विविधो ज्ञेयो वातश्लेष्मात्मको ज्वरः ।
चातुर्थको नाम गदो दारुणो विषमज्वरः ॥
शोषणः सर्वधातूनां बलवर्णाग्निनाशनः ।
त्रिदोषजो विकारः स्यादस्थिमज्जगतोऽनिलः ॥
कुपितं पित्तमेवन्तु कफश्चैवं स्वकालतः ।
शीतदाहकरस्तीव्रस्त्रिकालं चानुवर्त्तते ॥
स सन्निपातसम्भूतो विषमो विषमज्वरः ।
ऊर्द्ध्वं कायस्य गृह्णाति यः पूर्वं सोऽनिलात्मकः ।
पूर्वं गृह्णात्यधः कायं श्लेष्मपूर्वज्वरश्च सः ॥
जङ्घाभ्यां श्लेष्मिको ज्ञेयः शिरसोऽनिलसम्भवः ।
एवं विज्ञाय सद्वैद्यः कुर्य्यात्तत्र प्रतिक्रियाम् ॥
वेलाज्वरो रसगतो रक्ते चैकाह्निकस्तथा ।
मांसगोऽपि तृतीयः स्याच्चतुर्थोऽस्थिसमाश्रितः ॥
सर्वधातुगतो ज्ञेयो जीर्णो धातुक्षयङ्करः ।
भूतजे भूतविद्या स्याद्दधाति समताड़नम ॥
अभिशापात् ज्वरो यस्य तस्य शान्तिः प्रतिक्रिया ।
तत्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते ॥
पूर्वञ्चेतस्ततो मोहस्ततो विस्फोटतृट्भ्रमः ।
सदा मूर्च्छाप्रपन्नस्य प्रत्यहं वर्द्धते ज्वरः ॥
कामजे कामला पित्तैर्नयेच्च श्वसनं हितम् ।
क्रोधजे पित्तजं वापि सद्वाक्यैरुपशामयेत् ॥
ओषधीगन्धके मूर्च्छा कषायसेवनं हितम् ।
पित्तश्लेष्मविशुद्ध्यर्थं कुर्य्याद् वमनमादितः ॥
निदिग्धिका नागरिकामृतानां क्वाथं पिबेन्मिश्रितपिप्पलीकम्
जीर्णज्वरारोचनकासशूलश्वासाग्निमान्द्यार्दितपीनसेषु ॥

इति निदिग्धिकादिः ।

कासाजीर्णे श्वासहृत् पाण्डुरोगे मन्देवाग्नौ कामलारोचके च।
तेषां शस्ता पिप्पली स्यात् गुड़ेन हन्यात् नृणां जीर्णमाशु ज्वरञ्च॥
लघुपञ्चमूलीक्वथितः कषायः छिन्नोद्भवायाः सह पिप्पलीभिः।
जीर्णज्वरश्वासकफामयघ्नो मन्दाग्नि-शूलारुचि-पीनसानाम्॥
पटोल-पाठाकटुरोहिणीनां फलत्रिकं वत्सकनिम्बमोचाः।
द्राक्षामृताचन्दननागराणां क्वाथः पुराणज्वरनाशनाय॥

सजीरकं गुडं भक्षेत् सगुड़ां वा हरीतकीम्।
सगुड़ान् वा तिलान् भक्षेत् ज्वरे च विषमानुगे॥
सगुडं त्रिफलाक्वाथं भक्षयेद्वा गुडार्द्रकम्।
क्वाथोऽपि विषमाणाञ्च ज्वराणां नाशकारकः॥
वासाधात्री-दारु पथ्या-नागरत्रिफलाभवः।
मधुना मधुरः क्वाथश्चातुर्थकनिवारणः॥

अगस्तिपत्रस्वरसो निहन्ति नस्ये च चातुर्थकरोगमुग्रम्।
श्वासं भ्रमं चापि शिरोरुजाश्च विनाशयत्याशु हितं नराणाम्॥

विदारीक्षुरसः सर्पिर्मधुयुक्तं शृतं पयः।
पिबेच्चातुर्थकश्वास-कासवातज्वरापहम्॥

रसोनकल्कं तिलतैलमिश्रं योऽश्नाति नित्यं विषमज्वरार्तः।
विमुच्यतेऽसौ विषमज्वरेभ्यो वाताधिकैश्चापि सुघोररूपैः॥
पटोलनिम्बस्य दलानि कुष्ठं वचा गुडं गुग्गुलसर्षपाभयाः।
सर्पिर्युतोऽयं धूप-इति प्रदिष्टो विनाशनो वै विषमज्वराणाम्॥

इति [illegible]।

सुरसामूलमाहृत्य हस्ते बद्धा शुभे दिने।
वेलाज्वरादिकान् हन्ति भूतज्वरविनाशनम्॥
मुस्तामृतामलक्यश्च नागरं कण्टकारिका।
कणाचूर्णान्वितः क्वाथस्तथा मधुसमन्वितः॥
एकाहिकं वा वेलाद्यं ज्वरजातं व्यपोहति।

रसोनबीजं संगृह्य खण्डं कृत्वा निशासु च ।
तक्रमध्ये विनिक्षिप्य प्रभाते घृतसंयुतः ।
सेवितोऽपि ज्वरान् हन्ति वेलाद्यान् देहधातुगान् ॥
पिप्पलीवर्द्धमानञ्च पिबेत् क्षीरं रसायनम् ।
महौषधं नागरञ्च धान्यं चन्दनवालुकम् ॥
पिबेद् गुडूचिकाक्वाथं तृतीयज्वरशान्तये ।
अपामार्गस्य मूलञ्च नीलीमूलमथापि वा ।
लोहितेन तु सूत्रेण अपामार्गस्य मूलकम् ।
वामकर्णे करे बद्धा ज्वरं हन्ति तृतीयकम् ॥
वानरेन्द्रमुखं दिव्यं तरुणादित्यतेजसम् ।
ज्वरमैकाहिकं घोरं तत्क्षणादेव नश्यति ॥
वानराकृतिमालिख्य खटिकाभिः पुनः शृणु
गन्धपुष्पाक्षतैर्धूपैरर्चयेद्द्विपजांवरः ॥

मन्त्रः ।

ओं क्रां क्रीं श्रीं सुग्रीवाय महाबलपराक्रमाय स… पुत्राय अमिततेजसे एकाहिक द्व्याहिक त्र्याहिक चातु… महाज्वर भूतज्वर भयज्वर शोकज्वर क्रोधज्वर वेलाज्व… प्रभृतिज्वराणां दह दह हन हन पच पच अवतर अवत… किलि किलि वानरराज ! ज्वराणां बन्ध बन्ध क्रां क्रीं … फट् स्वाहा ।

अथ चातुर्वर्णरूपज्वराणां चिह्नानि ।

पुनश्चात्र प्रवक्ष्यामि ज्वराणां रूपलक्षणम् ।
मन्तप्तकाञ्चनाभासो हुताशनसमप्रभः ।
दण्डी यज्ञोपवीती च रौद्रो ब्राह्मणरूपकः ॥
जवाकुसुमसङ्काशो रौद्रदंष्ट्रान्वितस्तथा ।

खड्गहस्तो महारौद्रो माहेन्द्रो क्षत्रियो मतः॥
चम्पकप्रसवाभासस्तप्तकाञ्चनभूषितः।
दण्डहस्तो मध्यवेगो त्वसौ वैश्यज्वरो मतः॥
कृष्णमेघाञ्जनाकारस्तीक्ष्णदंष्ट्रोज्ज्वलाननः।
विनतो ज्वलनप्रख्यः कालः शूद्रो मतस्तथा॥

अथ चिह्नानि।

तीक्ष्णवेगः क्षुधायुक्तः शुचिर्द्दृष्टो व्रतप्रियः।
मूत्रञ्च किंशुकाभासं पाठशीलोऽतिजल्पकः॥
बहुश्वासी तृषाक्रान्तो रौद्रो ब्राह्मणपीड़ितः।
तस्य स्नानं जप होमं कृत्वा शान्तिः प्रपद्यते॥
तीक्ष्णज्वरोऽतितृष्णश्च रक्तमूत्रञ्च मूत्रयेत्।
कुरुते युद्धवार्त्ताञ्च उत्तिष्ठति बलातुरः॥
हृष्टनेत्रो महाश्वासः क्षुधया पीड़ितस्तथा।
मधुगन्धो मुखे स्वेदो माहेन्द्रक्षत्रियार्दितः॥
तस्यादौ ग्रहहोमन्तु देवतास्नपनं शुचिः।
दानजाप्यादिभिः कार्य्यैः प्राप्यते सिद्धिसङ्गमः॥
मध्यवेगः पीतगात्रः स्वप्नशीलोऽरुचिस्तथा।
शीतपवनहृट्तृष्णः कण्ठस्वेदोऽतिविह्वलः॥
बहुमूत्रो भक्तियुक्तो मौनी पीताम्रलोचनः।
नातितृष्णातुरः स्निग्धः स विज्ञेयो ज्वरेश्वरः॥
तत्र स्वस्त्ययनातिथ्यं द्विजदैवतपूजनम्।
जपहोमादिकं सर्वं कर्त्तव्यं शान्तिहेतुना॥
हृच्छूलश्चातिसारो वा मत्स्यगन्धाङ्गलेपनः।
उन्मादो चातिदीप्ताक्षो रतेषु विकलेन्द्रियः॥
प्रणयी त्वधनो भीरुर्ग्रामस्थैवाभिकाङ्क्षया।

कालभृङ्गारकेणापि शूद्रे सिद्धिर्न जायते ॥
स्नानं दानजपौ सुरार्चनविधिर्होमादयः प्रीतिता
भूतानाञ्च विशेषेण बहुधा तृप्तिश्च कुर्य्यात्ततः ।
गोभूमिं कनकान्नपानविधिना दानेन शान्तिर्भवेत्
सर्वेषाञ्च रुजां विनाशनमिदं मंशन्ति सत्यव्रताः ॥
वेगं कृत्वा विषं यद्वदाशये नीयते बलम् ।
कुप्यते प्रबलं भूयःकाले दोषो विषन्तथा ॥
शालिषष्टिकभक्तानां यूषं मुद्गाढकीषु च ।
पूर्वोक्तानि च शाकानि वातघ्नानि भवन्ति हि ॥
शतपुष्पा च जीवन्ती तण्डुलीयकवास्तुकम ।
घृतेन भाजिका मिश्रा शाकपत्राणीमानि च ॥
लावतित्तिरमांसादि वार्त्ताकानां तथातुरे ।
मृगाच्छकरिकाद्यानि जाङ्गलानि प्रयोजयेत् ॥
कोशातकी पटोलञ्च शुण्ठीकं रोहितं भवेत् ।
वर्जयेद्द्विदलान्नानि विदाहीनि गुरूणि च ॥
न पिच्छलानि तैलानि तथाम्लानि च वर्जयेत् ।
दधिमस्तुविशालानि नुदान्नानि भिषग्वरः ॥
ब्रह्मदकञ्च ताम्बूलं छूतं वापि सुरामपि ।
क्रोधं शोकञ्च त्यक्त्वा वै सदा सौख्यं विभुञ्जते ॥
न कुर्य्याज्जागरं रात्रौ दिवास्वप्नञ्च वर्जयेत् ॥
शकटवाजिकरिद्विपवाहनं प्रबलं परिवर्जयेत् तु सततम् ।
ज्वरिणमाशु सुखं बुभुजे सुधीः शुभविधान-निधान-समाश्रित
व्यायामञ्च व्यवायञ्च अशनं रात्रिजागरम् ।
ज्वरमुक्तो न सेवेत तदा सम्पद्यते सुखम् ॥
व्यायामाज्ज्वरसंवृद्धि व्यवायात् स्तम्भमूर्च्छनम् ।
स्मृतिश्च स्नेहपानाद्यैर्मूर्च्छा छर्दि र्मदोऽरुचिः ॥

गुर्वन्नभोजनात् स्वप्नाद् विष्टम्भो दोषकोपनम्।
अग्निसादं ज्वरत्वञ्च स्रोतसां चाप्रवर्त्तनम्॥

इति श्रीमदृर्षात्रियभाषिते हारीतोत्तरे ज्वराधिकारचिकित्सा नाम द्वितीयोऽध्यायः।

---

## तृतीयोऽध्यायः।

अथातीसारविज्ञानं भेषजं शृणु पुत्रक!।
ज्वरे चैवातिसारे च भेषजञ्चोपदिश्यते॥
भेषजं त्रिविधं प्रोक्तं सर्वरोगेषु युज्यते।
किञ्चिद्दोषप्रशमनं किञ्चित्तु धातुदूषणम्।
स्वस्थवृत्तौ मतं किञ्चित् द्रव्यं त्रिविधमुच्यते॥

तच्च दैवव्यपाश्रयं युक्तिव्यपाश्रयं सत्त्वावजयञ्च। मन्त्रौषधमणिमङ्गलबल्युपहार होमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिधानादीनि इति दैवव्यपाश्रयम्। आहारव्यवहारौषधद्रव्याणां योजनेति युक्तिव्यपाश्रयम्। अहितेभ्योऽर्थेभ्यो मनोनिग्रह इति सत्वावजयञ्च।

स्निग्धातिशीतगुरुशीतलपिच्छलान्नं
दुष्टाशनाति विषमाशनपानभक्ष्यम्।
अद्यादजीर्णमथशाकविषैर्भयैर्वा
शोकार्त्तिदुष्टपयसा तु विपर्य्ययेषु॥
दौर्बल्यकं विषमभोजनकेन चापसु
सम्भिद्यते मलमजीर्णं निहन्ति चाग्निम्।
सञ्जायते हि मनुजस्य तदातिसारो
नष्टोदराग्निमनुजस्य तदातिसारः॥
सञ्जायते स तु पुनर्बहुलो मलेन
स्यात् पञ्चधा निगदितो मुनिभिर्विविज्ञैः।

वक्ष्ये समासत उदीर्णरुजस्य नाशं
क्राथादिकैर्भवति पाचनकैश्च पूर्वम् ॥
युगपज्जायते यस्य ज्वरश्चैवातिसारकः।
ज्वरातिसारो घोरोऽसौ कष्टसाध्यो मनीषिणाम् ॥
न पित्तेन विना सोऽपि जायते शृणु पुत्रक!।
तस्य नो लङ्घनं प्रोक्तं ज्वरे चैवातिसारके ॥
सुवर्चलमतिविषाहिङ्गुपथ्याकलिङ्गकैः।
शुण्ठीवामातिसघ्नौ शूलघ्नौ ग्राहिपाचनौ ॥
पथ्यादारुवचामुस्ता नागरातिविषायुतैः।
आमातिसारनाशाय क्राथमेभिः पिबेन्नरः ॥
उत्पलं धान्यकं शुण्ठी पृश्निपर्णी बलायुतम्।
बालविल्वं गवां तक्रेणात्युष्णेन च पेषयेत् ॥
तेन लाजाकृतं मण्डं पानीयञ्च सुशीतलम्।
ज्वरातिसारशमनं हुताशनबलप्रदम् ॥

इति उत्पलषट्कः

शुण्ठीविषाजलधरामृतवत्सकानां
तिक्ताह्वयं कनकशीतलकः कषायः।
पाने विधेयमधुना प्रतिमाधितस्तु
ज्वरातिसारशमनाय सदा प्रदेयः ॥
पाठेन्द्रभूनिम्बघनामृतानां सपर्पटः क्राथ इहैव शस्तः।
आमातिसारञ्च जयेद्द्रुतं वा ज्वरेण युक्तं सहजञ्च तीव्रम्
शुण्ठी बालकमुस्ता विल्वं पाठा विषा च धान्यानि।
पाचनमरुचौ छर्दिज्वरातिसारं विनाशयन्ति ॥
वत्सकश्च सुरदारु रोहिणी धान्यविल्वमगधा त्रिकण्टक
निम्बविल्वगजपिप्पलीयुतो क्राथ एवमतिसार औषधम्
पञ्चमूली बलाविल्वगुडूचीमुस्तनागरैः।

पाठा भूनिम्बह्रीवेरकुटजत्वक्फलैः शृतम्॥
हन्ति सर्वानतीसारान् वमिश्वासज्वरार्दितान्।
सशूलोपद्रवांश्चासौ हन्याच्चैव सुदारुणम्॥
पञ्चमूल्यतिसामान्या योज्या पित्ते कनीयसी।
महती पञ्चमूली·तु वातश्लेष्मज्वरे हिता॥

इति पञ्चमूलीकाथः।

उत्पलं दाड़िमत्वक् च केशरं मधुपद्मवीजकम्।
धात्री पिष्टा तण्डुलतोयैः पानं ज्वरातिसारघ्नम्॥
उशीरं धान्यकं मुस्तं सविल्वं बालकं बला।
तथाच धातकीपुष्पं कषायस्य प्रशस्यते॥
ज्वरातिसारशमनं सशोणितं सपैत्तिकम्।
निर्हन्ति शोफं सकलं रुचिप्रदं विपाचनम्॥
कटुङ्गविल्वजम्बाम्रकपित्थं सरसाञ्जनम्।
लाक्षा हरिद्रे ह्रीवेरं कट्फलं शुकनासिकाम्॥
लोध्रं मोचरसं शङ्खं धातकी वटशुङ्गकम्।
पिष्टा तण्डुलतोयेन वटकानक्षसम्मितान्॥
छायाशुष्कान् पिबेच्छीघ्रं ज्वरातीसारशान्तये।
रक्तप्रसादनाश्चैते शूलातीसारनाशनाः॥

इति ज्वरातिसारचिकित्सा।

विगतमतीसारं चिरोत्थितं रक्तसहितमतिद्रुतम्।
मधुना सहितः शमयत्यरलुः पुटपाकनिर्य्यासितः॥
म्बूवटोडुम्बरप्लक्षकौ हि नागः प्रफुल्लारिकया शमी च।
न्द्रः सचूतोऽम्बुदजीविकाया आसां हि पुष्पञ्च सदा विदध्यात्।
स्थद्वयेन प्रपिवेद्धि तावत् यावद्विशेषांश मिदं प्रजायते।
नः कटाहे विपचेच्च सम्यक् दर्वीप्रलेपः स्वरसश्च यावत्।
त्ताय्यं ननं भिषगुत्तमेन क्षौद्रेण मिश्रं हरतेऽतिसारम्॥

हारीतेन यथा प्रोक्ता काकमाची सुपूजिता।
आलोक्यानेकशास्त्राणि आत्रेयेणापि पूजिता॥

जम्बुत्वचं वत्सकवल्कलञ्च निःक्वाथ्य नूनं सलिलेषु सम्यक्।
चतुर्विभागेष्वपि शोषितेषु उत्तार्य्य वस्त्रेष्वथ गालयेच्च॥
पुनः कटाहे विपचेच्च सम्यक् दर्व्या प्रलेपः स्वरसस्तु यावत्।
उत्तार्य्य शीते मधुना विमिश्रं लीढं हरेदप्यतिसारमुग्रम्॥
कुक्षौ तथा वक्षसि नाभिदेशे पायुप्रदेशे सततं निरुद्धे।
वातस्य रोधो हि शकृद्विभङ्गो भवन्ति सर्वेष्वतिसारकेषु॥
सफेनिलं पिच्छलमेव रूक्षमल्पं शकृद्वाथ सशब्दशूलम्।
गात्रं भवेत् कृष्णविचेष्टनञ्च वातातिसारं प्रवदन्ति तज्ज्ञाः॥

तस्यादौ लङ्घनञ्चैकमल्पं वा नैव लङ्घनम्।
तस्माद्देयं कषायन्तु पानभोजनमेव च॥

उदीच्य धान्यस्य जलेन कल्कं पानं हितं पाचयतेऽतिसारम्
तृष्णापहं दाहविनाशनञ्च सशूलहिक्कासु विनाशनं स्यात्॥

वालद्वयं मोचहरीतकी च सपर्पटं नागरकं जलेन।
क्वाथपानमतिसारके नृणां नाशमाशु कुरुते मलशान्तिम्।
शालिपर्णी पृश्निपर्णी वृहती कण्टकारिका।
वालाश्वदंष्ट्राविल्वानि पाठानागरधान्यकम्॥
एतदाहारसंयोगे हितं सर्वातिसारिणाम्।
तिन्दुकत्वचमाहृत्य काश्मरीपत्रवेष्टितम्॥
मृदा विलिप्य विधिवद्दहेन्मृदग्निना भिषक्।
रसं गृहीत्वा सक्षौद्रं सर्वातिसारनाशनम्॥

इति वातातिसार.

घर्मेण चोष्णान्नविभोजनेन घर्मेण तप्तोदकसेवनेन।
शोकेन तापेन रुषा कटुत्वे क्षारेण पित्तासृजि सारकः स्यात्॥
तेनारुणं पीतमथातिनीलं दुर्गन्धशोषज्वरपाण्डुयुक्तम्।

ामार्त्ति मूर्च्छा च तृषाङ्गदाहः पित्तातिसारस्य च लक्षणानि॥

शालिपर्णी पृश्निपर्णी बलाविल्वैस्तु साधितः।
दाड़िमाम्लो हितः पेयः पित्तातिसारशान्तये॥

कुशकाशेक्षुमूलानां शालीनलभवैर्जलैः।
मूलानां क्काथमाहृत्य शस्तं पित्तातिसारिणाम्॥

धान्यपञ्चकमूलानां क्काथः पित्तातिसारिणाम्।
त्वचं शाल्मलीमूलस्य सगुड़ां दुग्धपेषिताम्॥
पिबेत् पित्तातिसारघ्नीं सरक्तदाहशोषणीम्।

इति पित्तातिसारः।

द् स्वप्नादिश्रमाद्यैः सहजड़तया शीतसंसेवनेन
स्निग्धाहारातिभोज्यैः सतिलपलगुड़ैश्चेक्षुखण्डैर्गुरूणाम्।
शीतातिस्नानलौल्यात् पयसि दधियुताहारसंसेवनाच्च
जातःश्लेष्मातिसारो जठरगहुतभुग् यस्य पुंसस्त्वपाकः॥

ान श्लेष्माशुष्कभेदारुचिःस्यात् सान्द्रं विश्रं जाड्यता रोमहर्षः।
न्दाग्नित्वं मन्दवेगो विचेष्टः सालस्यो वा विड्विसारः कफोत्थः॥

तस्यादौ लङ्घनं प्रोक्तं ज्ञात्वा देहबलाबलम्।
पाचनञ्च विधातव्यं त्रूषणाद्यं भिषग्वर !॥

त्र्यूषणमभयाहिङ्गु चातिविषारुचकं वचा युक्तम्।
मधुसहितं लेहनं नृणां गङ्गामपि वाहिनीं रुन्ध्यात्॥

ालिङ्गपाठातिविषा बला च सौदीच्यमुस्तामरिचानि शुण्ठी।
ड़ेन चौद्रेण सहैव कल्को रक्तातिसारे कफजे शमाय॥

त्सकातिविषविल्वमुस्तका वालकेन सहितो जलेन तु।
ाथपानमतिशूलरक्तमुक् नाशनो ज्वरयुतेऽतिसारके॥

इति श्लेष्मातीसारः।

यस्तु रक्तशुद्धिविरेचने शोषदाहमतिरिच्यते।
रक्तातिसार इति विज्ञेयो वैद्यैर्महामतिभिः॥

धन्वनागरमुस्ता च बालकं बालविल्वकम् ।
बला नागबलाचेति क्वाथो रक्तातिसारिणाम् ॥
दाड़िमञ्च कपित्थञ्च पथ्या जम्बाम्रपल्लवान् ।
पिष्ट्वा देया मस्तु युक्ता रक्तातिसारवारणाः ॥
गुडेन पक्वं दातव्यं विल्वं रक्तातिसारिणे ।
मनुजे मधुयुक्ता वा दध्ना रक्तातिसारहाः ॥
वत्सकातिविषनागराभया पिषितञ्च मधुमस्तु संयुतम् ।
लेह एष मधुना च मानुषे रक्तवाहमतिवारयत्यपि ॥
कुटजत्वक् च पाठा च विश्व विल्वञ्च धातकी ।
मधुना सहितं चूर्णं देयं रक्तातिसारघ्नम् ॥

इति रक्तातिसार.

वराहवसामदृशं तिलाभं मांसधावनाभासम् ।
पक्वजम्बुफलसदृश गनिपातप्रवहहरम् ॥
तुलामथार्द्रांगिरिमल्लिकायाः संकुद्य कर्षञ्च रसं ददीत ।
तस्मिन् सपूते पलसंमितञ्च देयञ्च पिष्ट्वा सह शाल्मलेन ॥
पाठा समङ्गातिविषा समुस्ता विल्वञ्च पुष्पाणि च धातकीनाम
प्रक्षिप्य भूयो विपचेच्च तावत् दार्वीप्रलेपः मरसस्तु यावत् ॥
पीतस्ततः कालविदा जनेन मण्डेन च चौद्रयुतेन चापि ।
निहन्ति सर्वन्त्वतिसारमुग्रं कृष्णं सितं लोहितपीतकं वा ॥
दोषं ग्रहण्यां विविधञ्च रक्तं पित्तस्य चार्शांसि सशोणितानि
असृग्दरञ्चैवमसाध्यरूपं निहन्त्यवश्यं कुटजाष्टकोऽयम् ॥

इति कुटजाष्टकः

पथ्यापञ्चमूलक्वाथ श्चतुर्भागावशेषितः ।
तत्र क्वाथे पुनश्चूर्णमिमानि चौषधानि तु ॥
शृङ्गवेरं तथा लाचा पिप्पली कटुरोहिणी ।
दाड़िमत्वक् सुवर्णञ्च दार्वी सवत्सकं विषम् ॥

अटरूषकचूर्णानि संक्षिप्यात्र निघट्टयेत्।
आजं दुग्धं तदर्द्धेन घृतं चाष्टांशिकं क्षिपेत्॥
दार्व्या विलेपितं ज्ञात्वा गुड़स्य षोड़शानि तु।
पलानि मिश्रितं तत्र देयमप्रातराशने॥
त्रिदोषः सन्निपन्नतोऽत्यस्त्वतिसारश्च दारुणः।
शूलमूर्च्छाभ्रमानाहकामलानां विपाचनः॥
क्षतक्षीणक्षयाणान्तु हितोऽयममृतो वटः।

इति अमृतवटकः।

पलञ्चाङ्कोठमूलस्य पाठां दार्वीञ्च तत्समाम्।
पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान्॥
तेनैव मधुसंयुक्तानेकैकान् प्रातरुत्थितः।
पिबेदत्ययमापन्नः सर्वातीसारनाशनः॥
विल्वा गुरुलोध्रचूर्णमधुना विनियोजितम्।
रक्तातिसारशमनं बालानां क्षीणधातुषु॥

इति सन्निपातातिसारः।

यदा गुह्यं निरस्येति तदा कुर्य्यात् क्रियामिमाम्।
सह चर्य्याबलानाञ्च रसो ग्राह्यो घृतं पयः॥
पक्वा घृतेन लेपः स्यात् तस्य चेदं प्रशस्यते।
अरणीपल्लवक्काथो वाप्यं लोध्रं सचन्दनम्॥

प्रतप्य वङ्किसदृशं सहसा नरस्य
निर्वाप्य काञ्जिकमथो विदधीत तद्वत्।
मौख्यञ्च सम्यगुदसेचनकं प्रशस्तम्
संवेश्य मध्यगुदतो दृढ़बन्धनं स्यात्॥

इति गुदसंभ्रंशः।

लशुनकुणपगन्धं पूतिगन्धं घनं वा
घललजलसमानं पक्वजम्बूनिभं वा।

घृतमधुपयसाभं तैलशैवालनीलं
सघनदधि सवर्णं वर्जयेच्चातिसारम् ॥
भ्रममदनमकार्श्यं शूलमूर्च्छाविदाहं
श्वसनमतिविवर्णं छर्दिमूर्च्छातृषार्त्तम् ।
विकलमतिशयीतं श्लेष्मशोथज्वरार्त्तिः
स परिहरतु दूरं सद्भिदाता न दृष्टः ॥

शोफं शूलं ज्वरं तृष्णां श्वासं कासमरोचकम् ।
छर्दिं मूर्च्छाञ्च हिक्काञ्च दृष्ट्वातिसारिणं त्यजेत् ॥
दृष्ट्वा शोफं तथाध्मानं हिक्कां छर्दिमरोचकम् ।
तथाच पाण्डुरोगार्त्तमतिसारयुतं त्यजेत् ॥

यदल्पमल्पं क्रमशो निषेवितं मलं भगाधारगतञ्च नित्यम् ।
हत्वान्तराग्निं कुरुते नरस्य विकारमाहुर्ग्रहणीति संज्ञाम् ॥
निवृत्ते चातिसारे शमयति दहनं भूयसा दीपितोऽपि ।
भुक्ता न स्वास्थ्यमेति प्रतिदिनमनिशं सञ्चयित्वा निसर्त्तिः ॥
वारं वारं सतोदं विसृजति च शकृत् पक्वमामं घनं वा ।
दुर्व्याधिर्घोररूपो मनुजरुजकरः सैव संग्रहणीति ॥

लक्षयेच्चातिसारे च विज्ञेयं ग्रहणीगदम् ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥
नैव चैकेन दोषेण जायते ग्रहणीगदः ।
तेन संचीयते देहमन्तर्दाहो विपाकता ॥
ग्रहणीनामसाध्यो यस्तस्य वक्ष्यामि लक्षणम् ॥

चित्रं सशब्दं सृजतेऽच वर्चः शोफोऽनिलो वक्षमतीव रूक्षः
श्वासार्त्तियुक्तं तनुशैथिलञ्च स्रावो ग्रहण्यानिलकोपतः स्यात्
विदाहि शीर्णं सरुजं तृषार्त्तं दुर्गन्धपीतारुणनीलकालम् ।
संसृज्यते यस्य मला विमिश्रा पित्तोद्भवा सा ग्रहणीति सञ्ज्ञा
हृल्लासमूर्च्छार्दिःश्वसनञ्च शोफः कासो जड़त्वञ्च सशीतता च

रस्थमास्ये गुरुगात्रता स्यादरोचकं श्लेष्मभवो गदस्तु ॥
त्रभिः समेतं गदितञ्च चिह्न मेतस्य कोपो मधुरास्यता वा।
ाहोऽथमूर्च्छा श्वसनं जड़त्वं स सन्निपाती ग्रहणीगदः स्यात् ॥
ारुनागरनिशा सवासका कुण्डली मगधजा शठी घनम्।
स्ना सभार्गी सरलाह्वपुष्करं तत्पाचनं भवति वातिकग्रहे ॥
नलवेणुकुशानाञ्च काशेक्षूणाञ्च मूलकम्।
निःक्वाथ्य पानं विहितं पाचनं पैत्तिके ग्रहे ॥
व्याघ्री ग्रन्थि नागरञ्च सुरसा दाड़िमं चवी
रजनी वनचित्रञ्च श्लेषजां ग्रहणीं जयेत्।
शुण्ठी कणा द्विरजनी घनकञ्च गत्रि-
ग्रैन्थ्यः पुनः प्रतिविषा त्रिफला विड़ङ्गः ॥
सिन्धूत्थवह्नित्रिकटु त्रिसुगन्धियुक्तं
चूर्णं पुनर्गुड़युतं घृतमिश्रितञ्च।
कृत्वा विड़ालपदमात्रकमोदकांश्च
भक्षेद् यथा जलमपि ग्रहणीगदे च।
अर्शो भगन्दरमरोचकगुल्ममेहान्
शूलाश्मरीक्रिमिजपाण्डुगदं निहन्ति ॥
श्रेष्ठं रसायनमिदं वलिनाशनं स्यात्
वृष्यं बलं विदधतेऽप्यतिवृंहणाञ्च।
वर्णेन्द्रियाग्निजननं सकलामयघ्नं
कुष्ठभ्रमापहरणं कुरुते सदैव ॥

इति शुण्ठ्यादि अमृतप्राशनं नाम वटकः।

ीतकी पञ्चशतानि धीमान् द्रोणेन गोमूत्रशतेन पाच्यम्।
ाग्निना यावदशेषमेव मूत्रं विजीर्णं विधिवद् विधिज्ञः ॥
ोष्य चूर्णं प्रतिशोष्य शीतं छायाविशुष्कां प्रविदार्य्य चास्थीन्।
ेञ्च शुण्ठीं मगधां विषाञ्च सुगन्धिमूर्वाञ्चविकान्विताञ्च ॥

निःक्वाथ्यकल्पः कुटजस्य तावत् दर्व्योपलेपो भवतीति याव
तस्यार्द्धभागेन गुड़ं विमथ्यात् चीरं तदर्द्धेन गवाजकं वा ॥
निर्वापितं तं घृतभाजने च संस्थापितं प्राज्ञ दिनेन तेन ।

सिन्धूत्थवह्नि त्रिकटु त्रिसुगन्धियुक्तं
चूर्णं पुनर्गुड़युतं घृतमिश्रितञ्च ।
चूर्णेन तेन सकलग्रहणीञ्च पाण्डुं
शोषाश्मरीं क्रमिजगुल्ममथातिसारान् ॥

प्लीहा यकृत् श्वासिषु मानवेषु विसूचिका पीनसमस्तकार्त्तौ
विनाशनं तत्‌चणतो ज्वराणां श्वासाश्मचीणबलोदराणाम्
एकाहिकादिज्वरनाशनः स्यात् लेहोऽभयाद्योऽमृतवन्नराणा

इति अभयाद्योऽवलेह

द्राक्षाचीरेण पक्वा यावत् घनं दर्व्युपलेपि च ।
दृष्ट्वा पश्चात्तैः समालोड्य चेमान्यौषधानि मतिमान ॥
पर्पटातिविषा मूर्वा पटोलं घनबालकम् ।
तथाभयानां चूर्णन्तु समशर्करया युतम् ॥
तेन चीरेण संयोज्यं विदार्य्याः कन्दमेव च ।
घृतेन नवनीतेन पिण्डं कृत्वाथ भचयेत् ॥
सपित्तग्रहणीपाण्डुं कामलात्तितृषापहम् ।
भ्रममूर्च्छां तथा हिक्कां तमकोन्मादमश्मरीम् ॥
मेहपित्तासृजं कुष्ठं नाशयत्याशु निश्चितम् ।

इति द्राक्षादिचीरम

धवार्जुनकदम्बानां शिरीषबदरीषु च ।
निःक्वाथ्य पानमामघ्नं विसूचीशूलवारणम् ॥
कदलीचारमादाय शङ्खचारमथापि वा ।
प्रस्राव्य जलपानन्तु हिङ्गुसौवर्च्चलान्वितम् ॥
आमं हरति विष्टब्धं शूलञ्चाशु नियच्छति ।

विसूचिकानां शमनमजीर्णं जरयत्यपि ॥
मातुलुङ्गरसं ग्राह्यं द्विगुणं तत्र काञ्जिकम् ।
हिङ्गुसौवर्चलयुतं पानं हन्ति विसूचिकाम् ॥
क्षारं तोयञ्च पानाय दाहस्योपरि पाययेत् ।
शूलाध्मानं निहन्त्याशु कुरुते चाग्निदीपनम् ॥
आमेषु वमनं कुर्य्याद् विपक्के चैव लङ्घनम् ।
विष्टम्भे स्वेदनं निद्रा रसशेषे विरेचनम् ॥
उन्मत्ते चातिसारे च वमिः क्रोधातुरेषु च ।
अजीर्णे च विसूच्याञ्च दिवास्वप्नं हितं भवेत् ॥
न हितं श्लेष्मरोगे च हृद्रोगे तु शिरोरुजि ।
हृल्लासे च प्रतिश्याये दिवास्वप्नञ्च वर्जयेत् ॥
लवणं व्योष करञ्जबीजं रसं तथा दाड़िममातुलुङ्गाः ।
शायुतं पेष्य कृता च वत्तिस्तदञ्जनो हन्ति विसूचिकाञ्च ॥
सा विशाला च सुराह्वकुष्ठं शिग्रुवचा नागरकं शताह्वम् ।
लेन पिष्ट्वा वपुषं विदार्य्य खल्लीं विसूचीञ्च निवारयन्ति ॥
टो विधेयो घटकस्य वाष्पमेकैर्घटैर्वा वमनेन घोषाः ।
ोष्णपाणिं प्रतिषेकमेवं जयेद्विसूचीं जठरामयानाम् ॥
गन्धकं सैन्धवं व्योषं निम्बुरसविमर्दितम् ।
आतुरो भक्षयेच्छीघ्रं विसूचीनां निवारणम् ॥

इति अजीर्णचिकित्सा ।

इति श्रीमदृष्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने अतीसार-
चिकित्सा नाम तृतीयोऽध्याय. ।

---

## चतुर्थोऽध्यायः ।

### अथ गुल्मचिकित्सा ।

आत्रेय उवाच ।

श्वयथूत्थोपचारैश्च दोषैः संकुप्यतेऽनिलः ।
मन्दाग्निना हि जठरे जायते गुल्मरुक् नृणाम् ॥
उदरं गर्जते यस्य विषमाग्निश्च दृश्यते ।
तोदो वपुषि शूलञ्च वातगुल्मं विनिर्दिशेत् ॥
शोषोऽरतिः सपीतत्वं मन्दज्वरनिपीड़ितम् ।
तमो भ्रमपिपासार्त्तं गुल्मं तत् पित्तसम्भवम् ॥
शोफो जाड्यञ्च हृल्लासं तन्द्रालस्यं सशीतकम् ।
मन्दाग्निर्विड्विबन्धश्च गुल्मात्तत् श्लेष्मसम्भवम् ॥
मोहो विभ्रमता जाड्यमरतिः क्षुत्पिपासकम् ।
आलस्य निद्रता चैवं गुल्मन्तत् कफपैत्तिकम् ॥
निद्रालस्यञ्च दाहश्च शोथात् शूलञ्च सज्वरम् ।
वैवर्णमरतिर्जाड्यं विड्बन्धो विकलाङ्गता ॥
तथातिसारमूर्च्छा च तृषा हृल्लासवेपथुः ।
श्वासोऽरुचिरजीर्णत्वं गुल्मं तत् साम्निपातिकम् ॥
साध्यं केवलदोषोत्थं द्वन्द्वं कष्टेन सिध्यति ।
असाध्यं सन्निपातोत्थं वक्ष्यामस्तत् प्रतिक्रियाम् ॥
यकृत् चिकित्सितञ्चैव कथितञ्चोपचारणम् ।
तद्वत् प्लीहा समाख्यातो न चात्र कथितं पुनः ॥
चिकित्सोदरगुल्मस्य वक्ष्यते शृणु साम्प्रतम् ।
स्नेहनं रूक्षणञ्चैव पाचनं शोधनानि च ।
संशमनं विरेकञ्च वस्तिस्नेहनिरूक्षणम् ॥
चर्य्ये पानञ्च चूर्णानि गुल्मोपचरणक्रिया ।
शुण्ठी मूर्वा पञ्चमूलं लघु रास्ना च दारु च ॥

क्राथोऽस्याष्टावशेषः स्यात् तत्समं चौरमेव च।
दधि तत्सममेवन्तु पाचयेत्तत्समाग्निना॥
घृतं यावत् प्रदृश्येच्च सिद्धमुत्तार्थ्येत ततः।
तत्कृतं पानकेऽभ्यङ्गे भोजने च प्रदापयेत्॥
स्नेहं सप्तदिनं यश्चत्तस्माच्च रूक्षणं हितम्।
दिनत्रयञ्च कर्त्तव्यं कथयाम्यत्र कोविद!॥
शुण्ठी सौवर्च्चलं जीरे द्वे वा हिङ्गुसमन्वितम्।
काञ्जिकं पानमेतेषां रूक्षणं गुल्मशान्तये॥
गुल्मचिकित्सिते चारपाकोऽत्र प्रतियुज्यते।
क्षारं पलाशार्जुनशूरणस्य क्षारं तथैव सहयावशूकम्।
सौवर्च्चलं सिन्धुभवोद्भिदञ्च सामुद्रजं वापि विमिश्रयेच्च।
तोयं परिस्राव्य विधानतोऽपि युक्तं तथैतानि महौषधानि॥
पथ्याग्नि शुण्ठीरजनीसुराह्वं कुष्ठं विशाला च यवानिका च।
तथाजमोदा सहजीरके द्वे षड्ग्रन्थिका हिङ्गुयुतञ्च चूर्णम्॥
क्षारोदकौ पानविमिश्रपानं निहन्ति सर्वाण्यपि कोष्ठजानि।
गुल्मानि सर्वाणि विसूचिकानां मन्दाग्निशूलानि भगन्दराणाम्
प्लीहोदरामाहमथो विबन्धं विनाशनो रोगचयं नराणाम्॥

इति विरूक्षणम्।

पथ्यासमङ्गाकलसीत्रिपञ्च महौषधं वातिविषा सुराह्वम्।
जले च निःक्वाथ्यमिदं हि पानं गुल्मामयानां प्रतिपाचनञ्च॥
वचा यवानीत्रिकटुदशमूलीजलं शृतम्।
क्वाथश्चोष्णो हितः पाने धान्यनागरयाथवा॥
वातगुल्मेषु सर्वेषु ज्वरेषु विषमेषु च।
रास्नाद्यपञ्चकं वापि वातगुल्मप्रपाचनम्।
शठीसौवर्चलं शुण्ठी पाचनं वातगुल्मिने॥

इति वातगुल्मपाचनम्।

द्राक्षा विदारी कटुका निम्बपञ्चाणि चैव तु ।
सगुड़ं पाचनं देयं पैत्तिके गुल्मरोगिणे ॥
धात्रीकल्कं सितोपेतं पाचनं पित्तगुल्मिने ।
यवानी चोग्रगन्धा च तथाच कटुकत्रयम् ।
पाचनं श्लैष्मिके गुल्मे पीतं चोष्णं निशासु च ॥

इति श्लेष्मगुल्मपाचनं

अथ विरेचनानि वक्ष्यामः ।

नागरं कृमिजित् पथ्या त्रिवृता त्रिगुणायुताम् ।
चूर्णं गुडान्वितं देयं वातगुल्मविरेचनम् ॥
दन्ती च भागमेकञ्च द्वौ भागौ च हरीतकी ।
त्रिवृतायास्त्रिभागं स्यात् शुण्ठ्याश्चत्वार एव च ॥
प्रक्षिप्य सर्वमेकत्र सर्वतुल्यगुडेन तु ।
वटकं भक्षयेत् प्रातस्तस्योपरि जलं पिबेत् ।
कथितञ्च विरेकञ्च वातगुल्मोपशान्तये ॥

इति वातगुल्मविरेचन

पिबेदेरण्डतैलञ्च शर्करा क्षीरसंयुतम् ।
पित्तगुल्मविरेकाय श्रेष्ठमेतत् सुखावहम् ॥
आरग्वधं प्रवालानि तथैवारग्वधानि च ।
विभाव्यैरण्डतैलेन तत्पत्रैश्चैव वेष्टयेत् ॥
कर्दमेन प्रलिप्याथ अङ्गारेषु निधापयेत् ॥
सुस्विन्नभर्जिकां ताञ्च भक्षयेत् शर्करान्विताम् ।
विरेकं पैत्तिके गुल्मे हितं शुद्धविरेचनम् ॥

इति पित्तगुल्मविरेचनं

त्रिफला सुरसा शुण्ठी चूर्णं कृत्वा विभावयेत् ।
स्नुहीक्षीरेण वारैकं गुडेन सह मिश्रितम् ॥
विरेकः श्लेष्मगुल्मे च सर्वोदरविनाशनम् ।
शुण्ठीसौवर्चलं पथ्या विड़ङ्गञ्च पुनर्नवा ॥

चूर्णोऽपामार्गबीजानां स्नुहीक्षीरेण भावितः।
गुड़ेन संयुतं खादेत् पश्चात् सोष्णं जलं पिबेत्॥
विरेकः सर्वगुल्मेषु प्रशस्तो हितकारकः॥

इति विरेचनम्।

शङ्खिक्षारनिशाविशालकदली स्यात् शूरणं कोकिला
पालाशं दहनार्जुनं शठिजयाऽपामार्गकूष्माण्डकम्।
दग्ध्वा क्षारविपाचितं परिस्रुतं हिङ्गु त्रिकटूान्वितं
गुल्मानाहविबन्धशूलहरणं सर्वोदराणां हितम्॥

इति क्षारपानम्।

अजमोदा शठी दन्ती विडङ्गं कुष्ठतुम्बुरु।
त्रिफलाचित्रकञ्चैव शुण्ठीकर्कटशृङ्गिका॥
त्रिवृता च सुराह्वा च पुष्करं त्वक्दारुकम्।
तथाम्लवेतसञ्चैव तिन्तिडीकञ्च चिञ्चिनिः॥
समं तु मातुलुङ्गेन विभाव्यमेकतः कृतम्।
त्रिभागं हिङ्गुसंयुक्तं घृतेन चूर्णितं हितम्।
निहन्ति वातगुल्मञ्च सशूलमुदरं तथा॥

इति अजमोदादि।

हिङ्गु फलत्रिक जीरकयुग्मं चित्रकभार्गीसकुष्ठ विडङ्गम्।
तुम्बुरुपुष्कर विश्वसुराह्वं क्षारयुतं च लवणानि पञ्च।
वातिकगुल्मविनाशनहेतोः शूलरुजश्च नराणां निहन्ति॥
हिङ्गुसौवर्चलाजाजी विश्वकुष्ठ विड़ङ्गकम्।
आरनालेन पीतञ्च हन्ति गुल्मं सवातिकम्॥
अजमोदा त्रिलवणं शठी जीरे त्रिकटुकम्।
तुम्बुरुं चित्रकाजाजी हिङ्गुमधुना संयुतम्।
वातगुल्मविनाशाय वातरोगे हितं मतम्॥

इति वातगुल्मचिकित्सा।

विदारीक्षीर शुक्ला च पथ्या विश्वौषधं मधु।
लेहः पित्तात्मके गुल्मे हितः शोफनिवारणः॥
यष्टिकं निम्बपत्राणि तथा धात्रीफलं सिता।
चूर्णं मध्वावलीढ़ञ्च पित्तगुल्मनिवारणम्॥

इति पित्तगुल्मचिकित्सा

त्रिकटु त्रिफला चित्रवटकट्फलसंयुतम्।
चूर्णं मद्येन वा पीतं फलक्वाथेन वा हितम्॥
श्लेष्मगुल्मविनाशाय हितञ्चैतत् सुखावहम्।
रोध्रञ्च कट्फलं विश्वाकुष्ठं चित्रकमेव च॥
नागरं हिङ्गुसंयुक्तं चूर्णं मूत्रेण संयुतम्।
श्लेष्मगुल्मविनाशाय शूलोदरविनाशनम्॥
उग्रगन्धा च मरिचं क्षारचूर्णं समन्वितम्।
पिबेन्मूत्रेण संयुक्तं श्लेष्मगुल्मविनाशनम्॥

इति श्लेष्मगुल्मचिकित्सा

शटीसौवर्च्चलं भार्गी वल्कं यावशूककम्।
जीरे द्वे चाटरूषञ्च यवानी हिङ्गुसैन्धवम्॥
आरग्वधेन संयुक्तं चूर्णं मद्यतमेव च।
वातश्लेष्मोद्भवे गुल्मे सुखमाशु प्रपद्यते॥
उग्रगन्धाफलत्रिकं देवदारु पुनर्नवा।
त्रिवृत् सौवर्च्चलोपेतं क्षारोदकसमन्वितम्।
पीतं वातकफे गुल्मे सुखकारि परं मतम्॥

इति वातश्लेष्मगुल्मचिकित्सा

ग्रहणी गुल्मरोगेषु क्रियोक्ता प्रभवेद् यदि।
शोफोदरेषु सर्व्वेषु कार्य्यं चात्र विरेचनम्॥
शोफातिसारसंयुक्तं हन्ति गुल्मोदरं नरे।
तस्य क्षारोदकं पानं वृहत् हिङ्ग्वादिचूर्णकम्॥

अजमोदादिकं वापि शोफातिसारशान्तये।
वमिश्चैवातिसारश्च गुल्मरोगेषु यद्यपि॥
तेन साध्यं विजानीयात् प्रत्याख्येया क्रियाहिता।
गुड़दाड़िमपथ्या च मधुना सहितं पिबेत्॥
वम्यां चैवातिसारे च वारं वारं प्रयोजयेत्।
सर्वलक्षणसंयुक्तं गुल्मं तत्सान्निपातिकम्॥
लोटोऽरतिर्विवर्णत्वं मूर्च्छातिसारसंयुतम्।
वमिः क्लेदश्च तन्द्रा च तदसाध्यं त्रिदोषजम्॥
लङ्घनं दीपनं स्निग्धमुष्णं वातानुलोमनम्।
बृंहणन्तु भवेदन्नं तद्धितं सर्वगुल्मिनाम्॥
वल्लूरमूलकं मत्स्यान् शुष्कशाकादि वैदलम्।
न खादेदालुकं गुल्मी मधुराणि फलानि च॥
सरक्तगुल्मे न तु पाचनन्तु न हिङ्गुपानं कटिचालनञ्च।
तच्चैव सम्वेदनमर्दनञ्च न वा क्रमस्रोतप्लवनं हितञ्च॥

रोध्रार्जुनं खदिरमागधिका समङ्गा
क्वाथोऽम्लवेतस समं घृतसंप्रयुक्तम्।
गुल्मं सरक्तमपि चाथ निहन्ति चाशु
हृत्क्लेदनं च विनिहन्ति च कुष्ठरक्तम्॥

क्षीरपानं प्रदातव्यं घृतसौवर्चलान्वितम्।
रक्तगुल्मविनाशाय यकृत् पित्तजेऽपि वा॥
न हिङ्गुसंयुतं पथ्यं न चोष्णं न विदाहि च।
रक्तजे पित्तजे गुल्मे मांसानि जाङ्गलानि च॥

इति गुल्मचिकित्सा।

शृणु पुत्र! प्रवक्ष्यामि गुल्मानाञ्चैव लक्षणम्।
तस्मात्तेषां प्रतीकारमौषधानि विशेषतः॥

तिक्तैः कषायकटुकाम्लविदाहिरूक्षैः

शीताल्पभोजनपरैः श्रममैथुनैश्च ।
भाराध्वहस्तिरथवाहनधावनेन
संक्षुब्धवायुहननेन च वेगरोधैः ॥
तस्मात्तदग्रमनिलेन च कुप्यमानं
रक्तेन युक्तमनिले परिपाकमेति ।
सञ्जायतेऽपि मनुजस्य तथा तृतीयं
गुल्मेति नाम स च पञ्चविधो बभूव ॥
प्लीहाग्रकृदजठरकण्डुमलस्य बन्धः
प्लीहक्रिमिर्जठरहृक् च भवेच्च षष्ठः ।
एते भवन्ति ग्रहणीपरिवर्त्तमाना
संरातिदुःखदरदा मनुजस्य चित्ते ॥
कण्ठस्य शोषस्तिमिरन्त्वथ पार्श्वशूलं
नाभौ तथातिकृशतातिविसूचिका च ।
कार्श्यं स्वनोऽतिवमनं क्लमशूलमाहुः
श्वासेन गुल्ममिति लक्षणमेव विद्धि ॥
यस्यैतानि च लिङ्गानि गुल्मिनं तं विदुर्बुधाः ।
पञ्चधा सम्भवन्त्येते गुल्मा जठरसंस्थिताः ॥
हृत्कुक्षौ नाभिवस्तौ च मध्ये तु पञ्चमः स्मृतः ।
हृदयस्थो यकृन्नाम कुक्षौ मालमकोच्यते ॥
मध्ये प्लीहा समाख्यातो वस्तौ चण्डविद्रुधकः ।
नाभौ संलक्ष्यते ग्रन्थौ नामान्येषां पृथक् पृथक् ॥
अतः कोपं प्रवक्ष्यामि येन कुर्वन्ति बाधकम् ।
स्वभावात् पित्तरक्तोत्थे सेविताम्लविदाहितम् ॥
उष्णञ्च क्षारमद्यं वा चोष्णपानातिसेवनात् ।
शोकात् श्रमादध्वयानात् शोषात् संक्षोभणादपि ॥
उच्चभाषणगानाच्च धनुर्ज्याकर्षणाच्च वै ।

पृष्ठे मुष्ट्याभिघाताच्च हृदये ताड़नाच्च वा ॥
भारेणोद्धारणाद्वापि रक्तं शोषयते हृदि ।
तेन गुल्मेति नाम स्याज्जायते रक्तपित्तकम् ॥
कदाचित्त्रिषु दोषेषु सम्भवश्चास्य दृश्यते ।
वातेनादौरितं रक्तं कफेन च घनीकृतम् ॥
पित्तेन पाकतां प्राप्तं त्रिदोषसंश्रितं यकृत् ।
लक्षणं तस्य वक्ष्यामि तेन तच्चापि लक्षयेत् ॥
क्षीयते तेन मनुजो मृत्युराशु प्रवर्त्तते ।
वमिः क्लमस्तथोद्गारो हृल्लासः श्वसनं भ्रमः ॥
दाहोऽरुचिस्तृषा मूर्च्छा कण्ठे दाहः शिरो व्यथा ।
हृच्छूलञ्च प्रतिश्यायः ष्ठीवनं कटुका सह ॥
सशल्यं हृदिशूलञ्च निद्रानाशः प्रलापतः ।
हृदये मन्यते जाड्यमुदरं गर्जते भृशम् ॥
एतैर्लिङ्गैर्विजानीयाद् यकृत् कोष्ठान्तवक्षसि ।
यदि साध्यास्ततः कुर्य्युः कुष्ठं पञ्चसकं तथा ॥
ाठो च सिन्धूत्थविमिश्रितञ्च सूक्ष्मञ्च चूर्णं सह रामठेन ।
:क्वाथ्य तोयञ्च पिबेच्च वाम्लं सौवीरकं वा विनिहन्ति शीघ्रम् ॥
कृत् विधानोदरशूलकामान् विसूचिकाजीर्णकफामयघ्नम् ।
ण्ड्वामयार्त्तिग्रहणीं सगुल्माम् शुण्ठ्यादिचूर्णं त्वरितं निहन्ति ॥

इति शुण्ठ्यादिचूर्णम् ।

ार मुष्ककिंशुकार्जुनधवापामार्गरम्भातिला
ीवन्तो कनकाह्वयं सरजनी कूष्माण्डवल्ली तथा ।
ासाशूरणमेव तीव्रदहनं प्रज्वाल्य भस्मीकृतं
ायेन प्रतिसेव्य निस्रुतपयः पानं विधेयं यकृत् ॥
्लानाहविबन्धकान् कफभवान् रोगान् जयेत् कामलान्
ाद्रध्यादिकशूलपाण्डुग्रहणी शोफार्शसां पीनसाम् ।

मेदोऽग्नीनामजीर्णक्रिमिमलगुदभ्रंशकादींस्तु मेहान्
शूलोद्गारप्रभवसकलभ्रान्तिरोगान्विहन्ति ॥

पूयाभः पतते श्लेष्मा पूतिगन्धोऽतिविस्रकः ।
रक्ताभस्तत्र सङ्काशः ष्ठीवते च मुहुर्मुहुः ॥
तथातिसार्य्यते रक्तं श्रमः संक्षीयते वपुः ।
क्षतजाः समदाः गात्रे यकृद्वक्षसि संश्रिताः ॥
श्वासस्तृषा वमिर्मोहः शोफः स्यात् करपादयोः ।
रुचिबन्धोऽतिसारश्च यकृद्दूरे परित्यजेत् ॥
अतो वक्ष्यामि भैषज्यं येन सम्पद्यते सुखम् ।
तस्यादौ लङ्घनञ्चैकं पाचनं तदनन्तरम् ॥

शुण्ठीपकुल्यामरिचं शठीनां यमानिकाभीरु हरीतकीनाम्
क्वाथोऽथवा कल्कमपि प्रशस्तमानाहगुल्मार्त्तिविसूचिकानाम्
भद्रोपकुल्याभयशृङ्गवेर पथ्या त्रिभागा च कणाचतुर्थः ॥

क्षतक्षयं यकृत् पूर्वं चोपवासञ्च पाचनम् ।
न देयं हिङ्गुसंयुक्तं चूर्णं क्वापि तदातुरे ॥

निम्बनीपधरचेतसं निशाकाश्मरी च तुलसी च सिंहिका ।
क्वाथ एव हृदयामयापहः आशु शूलयकृतश्च नाशकृत् ।
सौराष्ट्रिकामोममहौषधानि दुरालभाजातिप्रवालकञ्च ।
दार्वी यवानीककुभं समङ्गा क्वाथः सर्पपियकृदाशु हन्ति ॥

इति यकृतचिकित्सा ।

अमातुरेण पानीयं पीत्वा वेगातिधावनम् ।
धावते वा पिबेत्तोयं भुञ्जते वातिदाहिकम् ॥
तथा पापाम्बुना वाथ दुर्गन्धपललेन च ।
अष्ठीलानाम विख्याता गुल्मोधमाश्रितेऽपि वा ॥
तेन हृत्क्लामशूलं वा रोधो ध्वान्तञ्च वेपथुः ।
तृष्णातिसारवमनं गात्राणां दाहमेव च ॥

एतैर्लिङ्गैः समायुक्तं जानीयाद् गुल्मपीड़ितम्।
तस्मादस्य प्रतीकारं वक्ष्यामि शृणु पुत्रक!॥
पथ्या समङ्गा कलसीविषा च महौषधं चातिविषा सुराह्वः।
जलेन निःक्वाथ्य च तस्य पानं गुल्मामयानां प्रतिपाचनञ्च॥
क्षारं पलाशार्जुनशूरणस्य तथैव सर्वस्य रसेन मिश्रम्।
सौवर्चलं सिन्धुभवद्रवञ्च सामुद्रिकेणापि विमिश्रयेत्तु॥
तोयं परिस्राव्य विधानतोऽपि युक्तं तथेमानि महौषधानि।
पथ्याग्निशुण्ठीरजनी सुराह्वा कुष्ठं विशाला च यवानिका च॥
तथाजमोदासहजीरके द्वे षड्ग्रन्थिहिङ्गुप्रयुतञ्च चूर्णम्।
क्षारोदकेनाथ विमिश्रपानं निहन्ति सर्वाण्यपि कोष्ठजानि॥
गुल्मानि सर्वाणि विसूचिकानां मन्दाग्निशूलामयकान्निहन्ति।

इति श्रीमदत्रिजभाषिते हारीतोत्तरीये तृतीयस्थाने गुल्मचिकित्सा नाम चतुर्थोऽध्यायः।

---

## पञ्चमोऽध्यायः।

क्रिमयो द्विविधाः प्रोक्ता बाह्याभ्यन्तरसम्भवाः।
बाह्या यूकाः प्रभिन्नाः स्युः किञ्चुलूकास्तथान्तराः॥
सप्तधा हि भवेद्बाह्याः षड्धाचान्तः समुद्भवाः।
तेषां वक्ष्यामि संभूतिं बाह्या नाभ्यन्तरे नृणाम्॥
रूक्षादतिबलात् स्वेदाच्चिन्तया शोचनादपि।
कफधातुसमुद्भूतास्तीक्ष्णा यूका भवन्ति हि॥
यूकाः कृष्णाः पराः श्वेतास्तृतीया चर्मणि स्थिता।
सूक्ष्मातिविकटा रूक्षाश्चर्मभाश्चर्मयूकिकाः॥
चतुर्थी विन्दुकी नाम वर्त्तुला मूत्रसम्भवा।
मत्कुणाद्याश्च पञ्चम्यो बाह्योपद्रवकारिणः॥
यूका मस्तकसंस्थाने श्वेता वस्त्रनिवासिनी।

चर्मयूका नेत्रचर्म सूक्ष्मा रोमाणि यष्टिका ।
उष्णद्रव्यनिषेवाच्च अजीर्णे मधुरद्रवात् ॥
रूक्षान्न गोधूमयवान्न पिष्टगुडेन वा क्षीरविपर्य्ययेण ।
दिवाशयानेन सपिच्छलेन घर्मेण पापोदकसेवनेन ।
सञ्जायते तेन मलाशयेषु क्रिमिव्रजं कोष्ठविकारकारि ॥
षड्विधास्ते समुद्दिष्टास्तेषां वक्ष्यामि लक्षणम् ।
कफकोष्ठं मलाधारं कोष्ठे सर्पन्ति सर्पवत् ॥
पृथुमुण्डा भवन्त्येके केचित् क्रिमिकर्णनिभाः ।
धान्याङ्कुरनिभाः केचित् केचित् सूक्ष्मास्त्वथाणवः ॥
सूचीमुखाः परिज्ञेयाश्चान्त्राणि सीदयन्ति ते ।
वक्ष्यामि लक्षणं तेषां चिकित्साञ्च शृणुष्व मे ॥
ज्वरो हृद्रोगशूलं वा वमिहृत् लोदन भ्रमः ।
रुचिमन्दो विवर्णत्वमतिसारः सफेनिलः ॥
गर्जनं जठरे चैव मन्दाग्नित्वं च जायते ।
पिपासा पीतता नेत्रे क्रिमुकैः पीड़ितस्य च ॥

इति गण्डूपदलक्षणम् ।

सूचीवत्तुदतेऽन्त्राणि रक्तं चैवातिसार्यते ।
यकृद्वा भक्षयन्त्यन्ये रक्तं वा वमते भृशम् ॥
कोष्ठे सुखेऽरुचिश्चापि सन्दाहित्वञ्च वेपथुः ।
क्षुत्तृष्णा च ज्वरो ज्ञेयाः सूचीमुखक्रिमीरुजाम् ॥

इति सूचीमुखलक्षणम्

ये च धान्याङ्कुरास्तेषां वक्ष्याम्यथ च लक्षणम् ।
मलाशयस्थाः क्रिमयो मलं जर्ज्जयन्ति ते भृशम् ॥
तैस्तु संपीड्यते देहे विड्विभेदं परूषता ।
कृशत्वञ्चापि हृत्क्लेदं क्रिमयो जनयन्ति ते ॥
हारीतः संशयापन्नः पादौ संगृह्य पृच्छति ।

कथं देहे मनुष्यस्य मलमूत्ररसाशये ॥
सम्भवन्ति कथञ्चादौ वर्द्धयन्ति कथं पुनः ।
कथ च शीर्णोऽन्नरसे नानाहारविभक्षणे ॥
जायन्ते केन कृमयः सूक्ष्माधोगामिनोऽप्यथ ।
नानामपक्वभक्ष्यान्नं दहते त्वा हुताशनः ॥
कथं ते क्रिमयश्चान्ते न दह्यन्तेऽन्तराग्निना ।
एवं पृष्टा महाचार्य्यः प्रोवाच मुनिपुङ्गवः ॥

आत्रेय उवाच ।

शृणु पुत्र ! महाबाहो ! क्रिमिसम्भवकारणम् ।
विरुद्धान्नरसैः पुत्र ! रक्तञ्चैवास्य कुप्यति ॥
कफेनैकदिन याति शुक्रेण कारणं व्रजेत् ।
पञ्चभूतात्मके वायौ ते तु जाताः सचेतनाः ॥
कोष्ठाग्निना न दह्यन्ते न जीर्य्यन्ते रसानिति ।
विषे जातो यथा कीटो न विषेण मृतिं व्रजेत् ॥
तथा हुताशनोद्भूत न हुताशेन जीर्य्यति ।
भेषजं सम्प्रवक्ष्यामि येन तेऽपि तरन्ति वै ॥
पतन्ति वा शमं यान्ति भेषजानि शृणुष्व मे ।
वचाजमोदाकृमिजित् पलाशबीजं शठी रामठकं त्रिवृच्च ।
उष्णोदके तत्परिपिष्य पेय पतन्ति शीघ्रं शतधा तु कीटाः ॥
शठीयवानीपिचुमर्दपत्रान् विडङ्गकृष्णातिविषारसोनम् ।
सम्पिष्य मूत्रेण त्रिवृत्प्रयुक्तं विनाशनं सर्वकृमिरुजानाम् ॥
मरिचं पिप्पलीमूलं विडङ्गं शिग्रुयवानिका त्रिवृतः ।
गोमूत्रेण तु पेयं पानं शीघ्रं कृमीन् हन्ति ॥
मुस्ता विशाला त्रिफला सुपर्णी शिग्रुः सुराह्वं सलिलेन कल्कः ।
पानं सकृष्णाकृमिशत्रुचूर्णं विनाशनं सर्वकृमीरुजाञ्च ॥
सुरसा च सुरदारु मागधीविडङ्गकरिपत्रविलङ्गदन्ती ।

त्रिवृद्रसोनं त्रिभिरेव ताडकं क्रिमिं निहन्यात् सलिलेन सेवित
मातुलुङ्गस्य मूलानि रसोनं क्रिमिजिच्चिवृत् ।
अजमोदानिम्बपत्रं गोमूत्रेण तु पेषयेत् ॥
पानमेतत् प्रशंसन्ति क्रमिदोषनिवारणम् ।
ज्वरप्रोक्तानि पथ्यानि क्रमिदोषे प्रदापयेत् ॥

इति क्रमिचिकित्सा

इति श्रीमदात्रेयभाषिते हारितोत्तरीये क्रमिचिकित्सा नाम पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

अथातो मन्दाग्निचिकित्सितं व्याख्यास्यामः ।

आत्रेय उवाच ।

अग्निश्चतुर्विधः प्रोक्तः समो विषमतीक्ष्णकः ।
मन्दस्तदापरः प्रोक्तः शृणु चिह्नानि साम्प्रतम् ॥
वातपित्तकफे साम्यात् समः सञ्जायतेऽनलः ।
तैरेव विषमं प्राप्तं विषमो जायतेऽनलः ॥
तीक्ष्णः पित्ताधिकत्वेन जायते जठराग्निकः ।
वातश्लेष्माधिकत्वेन जायते मन्दसंज्ञकः ॥
यद्भुक्तं प्रकृतिस्थन्तु पाचयत्यपि चानलः ।
स समो नाम निर्दोषः सर्वधातुविवर्द्धनः ॥
किञ्चित् पाचयते भक्ष्यं कदाचिदविपक्वकः ।
वातेन वा तु विषमं करोत्यपि विसूचिकाम् ॥
प्रकृत्याधिकमश्नाति तृप्तिं न लभतेऽपि च ।
सदाहपीतता नेत्रे तीक्ष्णो वै क्षयकृत् वले ॥
यद्भुक्तञ्चैव शक्नोति यत्तु श्लेष्मबलाधिकात् ।
सोऽपि मन्दानलो नाम गुल्मोदरपरो मतः ॥

समेन समता देहे देहधातुबलेन्द्रियैः।
हृष्टः सम्पूर्णगात्रस्तु सचेष्टो वर्त्तते नरः॥
विषमे वानिलाद्याश्च ग्रहणी चातिसारकाः।
प्लीहा गुल्मो विसूची च शूलोदावर्त्तसंज्ञकाः॥
आनाहो मन्दचेष्टत्वं जायन्ते विषमाग्निना।
कफवातावुभौ क्षीणौ तीव्रो भवति पित्तकः॥
भोजने लभते प्रीतिं भुक्त्वा चैव च जीर्य्यते।
तेन भस्मकसंज्ञस्तु जायते जठरानलः॥
पाण्डुः पित्तातिसारस्तु राजयक्ष्मा हलीमकः।
भ्रमः क्लमोऽतिवैकल्यं यकृद् वापि प्रमेहकाः॥
शूलमूर्च्छा रक्तपित्तं पित्ताम्लं मूत्रकृच्छ्रकम्।
तेन सङ्क्षीयते गात्रं जायतेऽन्नस्य लौल्यता॥
भक्षिताः काष्ठपाषाणा जीर्य्यन्ते तस्य देहिनः।
इति प्रोक्तं निदानञ्च नरस्याग्निप्रकोपनम्॥
बहुधापि न चोक्तन्तु ग्रन्थविस्तारशङ्कया।
अतो वक्ष्ये समासेन भेषजानि पृथक् पृथक्॥
पाचनं शमनञ्चैव दीपनञ्च तथोपरि।

रास्ना शठी प्रतिविषा सुरसा च शुण्ठी
सिन्धूत्थहिङ्गुमगधा च सुवर्चलञ्च।
चूर्णं कृतं सगुडमोदकभक्ष्यमाणं
वातात्मकन्तु विषमाग्निसमीकरोति॥
शूलानजीर्णविषमाग्निविसूचिकासु
वातादयः सकलगुल्मविनाशनं स्यात्।
भुक्तोपरि क्वथितमेव पिबेत् सुखोष्णं
श्रेष्ठं तथोपरि समस्तरसानुभोज्यम्॥

इति विषमाग्निचिकित्सा।

द्राक्षाभयातिक्तकरोहिणी च विदारिकाचन्दनवासकञ्च।
मुस्तापटोलञ्च किरातकानां कृष्णाबलायाश्च विकाविषाणाम्॥
पलालवङ्गानलपद्मकञ्च योज्या च शृङ्गी धनिका समांशा।
चूर्णं सखर्जूरसितासमेतं घृतेन तं चार्द्धपलप्रमाणम्॥
भक्षेत् प्रभाते मनुजेन दुग्धं निःक्वाथ्य पानं सघृतं विधेयम्।
करोति तीव्राग्निसमं प्रकृष्टं कृशस्य पुष्टिं तनुतेऽपि नूनम्॥
क्लमभ्रमं शोषविनाशनं स्यात् तृष्णातिलौल्यस्य शमं करोति।
सरक्तपित्तं क्षयपाण्डुरोगं हलीमकं कामलकमाशु नश्येत्॥

तण्डुलारक्तशालीनां द्विभागेन च धीमताम्।
भृष्टा तिलांश्च संकुट्य तदर्द्धेन विमिश्रितान्॥
भृष्टा तत्समसुद्गांश्च चैकीकृत्वा तु साधयेत्।
सिद्धाञ्च कृशरां सम्यग घृतेन सह भोजयेत्॥
एकाहान्तरितो यस्तु तीव्राग्निस्तस्य नश्यति॥

इति तीव्राग्निचिकित्सा।

इति श्रीमहर्षिविरचिते हारीतोत्तरीये मन्दाग्नि-
चिकित्सितं नाम षष्ठोऽध्यायः।

---

## सप्तमोऽध्यायः।

हरीतकी हरिहरतुल्य षड्गुणा चतुर्गुणा चतुर्विशालपिप्पली।
हुताशनं हिङ्गु सैन्धवसंयुतं रसायनं हेमनृपवह्निदीपनम्॥

इति हरीतक्यादि।

हिङ्गु च पिप्पली सनागरवचा सदीप्यकाग्निश्च तक्तौविडङ्गौ
भागवृद्धितदूर्नियोज्य चूर्णितं क्षौद्रं तथा च लवणत्रयैर्युतम्।
पीतं सुरयापि च काञ्जिकेन समस्तु नोष्णसलिलेन वा पुनः
सप्लीहशूलं गुदजं विबन्धकमरोचकं हन्त्यपि सुचिराद्भुतम्॥
यमानी तिन्तिड़ीकनागरञ्च सदाड़िमसमम्लवेतसकोलम्।

समानि चैमानिच कर्षमात्रं कर्षादिभागेष्वितरे वलानि ॥
धन्याजाजीभृङ्गसुवर्चलञ्च कणाशतैकं मरिचं शतद्वयम् ।
पलानि चत्वार्य्यपि शर्कराया: समं विचूर्ण्याथोदरान् प्रमार्ष्टि ॥
भवेद् यदेदं रुचिकृद् विबन्धं सप्लीहगुल्मं जयते सशूलम् ।
श्वासं विनश्येद् हृदयामयघ्नं सजिह्वकण्ठामयशोधनं स्यात् ॥
आमग्रहण्यर्शविकारमन्दानलस्य सन्दीपनमेव चूर्णम् ।
यवानिषाडविकाभिधानमरोचकानां शमनं प्रशस्तम् ॥

इति यवानीषाडवं चूर्णम् ।

यवागूः पञ्चकोलस्य कुलत्थराडक्ययूषकम् ।
मुद्गयूषेण वा सम्यक् भक्तानां भोजनं हितम् ॥
सहिङ्गु लवणाढ्यञ्च व्यञ्जनं संप्रशस्यते ।
दधिमिश्रघृतवत् श्रेष्ठं भोजनारोचकेष्वपि ॥
कारवेल्लं पटोलञ्च पलाण्डुः शूरणं शठी ।
लवणं धान्यकं श्रेष्ठं प्रलेहञ्च कटुत्रिकम् ॥
महौषधपवास्तूकं शतपुष्पा यवानिका ।
तुण्डीरकस्य मूलानां शाकं श्रेष्ठं प्रशस्यते ॥
गोधूमपोलिका श्रेष्ठा भृङ्गाङ्गारैररोचके ।
जाङ्गलानि च मांसानि भोजयेद् भिषगुत्तमः ॥

इति श्रीमदत्रर्षिविप्रभाषिते हारीतोत्तरीये अरोचक-
चिकित्सितं नाम सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः ।

अथातो शूलचिकित्सितं व्याख्यास्यामः ।

अनङ्गनाशाय हरस्त्रिशूलं मुमोच कोपान्मकरध्वजस्य ।
तमापतन्तं सहसा निरीक्ष्य भयार्दितो विष्णुतनुप्रविष्टः ।

प्रदीर्घ हुङ्कारविभीषितात्मा पपात भूमौ प्रथितः स शूलः
स पञ्चभूतानुगतं शरीरं प्रदूषयत्यस्य हि पूर्वसृष्टिः ॥

व्यायामपाननिशिजागरणव्यवाय-
शोकातिभार गतिधारणकश्रमेण ।
वैषम्यपानशयनेन च भोजनेन,
शीतेन वायुः कुपितः प्रकरोति शूलम् ॥
विष्टम्भिरूक्ष यवमाषकलायमुद्ग
निष्पावकत्रिपुटकोद्रवका मसूरः ।
गोधूमक्षुद्रकफरूक्षविभोजनेन
चैतैश्च पानमलरोधनमूत्ररोधैः ॥
वायुस्त्वधोगतपथं प्रविरुध्य मूलं
वातात्मको भवति चान्तरवह्निमान्द्यम् ।
तस्मादतिप्रबलता कुपितैः प्रकोष्ठे
शूलं करोति गुदमार्गनिरोधितोऽपि ॥
गात्रेऽपि तोदविरतिर्मलिनातिदीना
वातार्त्तिपीडितनरस्य महामतेः स्यात् ।

इति वातशूलोत्पत्तिः ।

क्रोधातपादनलसेवनहेतुना च
शोकाद्भयार्त्तिगतिधावन घर्मरोधात् ।
क्षाराम्लमद्यकटुकोष्णविदाहिरूक्ष-
सौवीर शुष्कपललेन च राजिकाभिः ॥
संकुप्यतेऽनिलसमे च तमेव पित्तं
शूलं करोति जठरे मनुजस्य तीव्रम् ।
तेनाङ्गदाहारतिघर्मतृषातिमूर्च्छा
नाभ्यन्तरे दहति शोषसपीततास्ये ॥

इति पित्तशूललक्षणम् ।

अत्यायामेऽस्निग्धसंसेवनेन
गोल्याहारे चेक्षुतैलैः पयोभिः।
अन्नाहारे निद्रया सेवनैस्तु
शतैरेतैः कोपयेच्छ्लेष्मकस्तु॥
माषातिशीतलपयोदधिभिः सुशीतैः
मत्स्यैस्त्वनूनपललै रतिसेवितैस्तु।
श्लेष्मा भृशं शमयतेऽनलमाशु शूलम्
कोष्ठे करोति मनुजस्य विकारमुग्रम्॥
हृल्लासकासवमिजाड्यशिरोगुरुत्वं
स्तम्भमित्यशीतलतनुं रुचिबन्धनञ्च।
भुक्तप्रसेकमधुरास्य मथाभिरामं
स्निग्धं सुखं भवति यस्य कफात्मकोऽसौ॥

..था भवन्त्येव भवन्ति यस्य चिह्नानि वै तस्य भवेच्च शूलः।
..र्यन्तिकानीव भवन्ति यस्य तमाहुरेकेऽपि नरस्य शूलम्॥
हृत्कण्ठपार्श्वे कफपैत्तिकस्तु हृन्नाभिमध्ये कफपित्तशूलः।
..स्तौ च नाभौ दधतः प्रदेशे विलोलमानः स तु वातपित्तात्॥

..कोऽपि सुखसाध्योऽसौ द्वन्द्वः कष्टेन सिध्यति।
त्रिदोषजस्त्वसाध्यस्तु बहूपद्रवसंयुतः॥
निदानैः कुपितो वायुर्वर्त्तते जठरान्तरे।
तेनेति संज्ञा दश स्युः शूलस्य परिगीयते॥
त्रयो वातादिका ज्ञेया द्वन्द्वजास्तु पुनस्त्रयः।
सामो निरामको द्वौ च शूलाश्चाष्टौ इमे स्मृताः॥
अजीर्णान्नवमः प्रोक्तो दशमः परिणामजः।
एवं दशप्रकारेण शूलं सम्भवते नृणाम्॥
भुक्तोपरि भवेद्यस्तु सोऽपि ज्ञेयः कफात्मकः।
जीर्णेऽन्ने च भवेद्यस्तु स ज्ञेयः परिणामजः॥

आध्मानमूर्द्धञ्च विवर्द्धनञ्च जृम्भा तथा वेपथु मार्जनञ्च ।
उद्गीरणं स्निग्धमुखातिजिह्वा वातेन शूलं भजते विधिज्ञ ! ॥
दाहो रतिर्मोहितमोऽपि तृष्णा कृच्छ्रेण मूत्रं कटुकास्यता च ।
स्वेदातिशोषो वदनञ्च पीतं पित्तात्मकोऽसौ प्रवदन्ति धीराः ॥
छर्दिस्तथा कासबलासमोह आलस्यतन्द्राजड़तातिशैत्यम् ।
कफात्मकं तं भिषजां वरिष्ठं शूलं भवेद्द्वन्द्वजरोगसंज्ञम् ।
त्रिभिस्तु दोषैस्तु त्रिदोषजः स्यात् रक्तेन चैकादशमः प्रदिष्टः ।
पित्तात्मकानि प्रभवन्ति यस्य चिह्नानि यस्यामृगछर्दनञ्च ।
शोषस्तृषादाहतमोऽपि कासश्वासेन रक्तप्रभवोऽतिशूलः ॥

विना वातेन नो शूलं विना पित्तेन नो भ्रमः ।
न कफेन विना छर्दिर्न रक्तेन विना तमः ॥

इति शूलनिदानम् ॥

इति शूलपरिज्ञानमतो वक्ष्यामि भेषजम् ।
येन शूलार्त्तिशमनं शूलो सम्पद्यते सुखम् ॥

दृष्ट्वा शूलं लङ्घनं पाचनञ्च विरेचनं वान्तिरथापि स्वेदः ।
क्षार चूर्णं वर्जयेच्छूलशान्त्यै पानाभ्यङ्गात् कामतो वै मनुष्यः ।
हिङ्गुनागरशठीसुवर्च्चलं दारुपौष्करघनापुनर्नवा ।
क्वाथपानमिति शूलिना हितं पाचनं जठरगुल्मिनामपि ।
हिङ्गुपौष्करशठीसुवर्च्चलं क्वाथपानमपि शूलिनां हितम् ।
वातशूलशमनाय शस्यते पाचनं निगदितञ्च वर्त्तते ॥
सिन्धूत्थहिङ्गु रुचकं शठी यवानी पथ्यायवक्षारसमं विचूर्णम् ।
देयं सुखोष्णेन निहन्ति शूलं वातात्मकं त्वाप्यचिरेण शूलम् ।

हिङ्गु सौवर्च्चलं पथ्या यवानी सपुनर्नवा ।
वालेरण्डो बृहत्यौ द्वे तुवरं व्योषमन्वितम् ॥
क्षारसौवर्च्चलोपेतं क्वाथो वा चूर्णितं तथा ।
सद्यो वातात्मकं शूलं हन्ति सद्यो विसूचिकाम् ॥

तुम्बुरुपौष्करहिङ्गु यवानीव्योषं च वा वृहतीत्रिगुणेन।
युक्तमिदं लवणाष्टकचूर्णं भवति शूलनिवारणसत्तमम्॥

क्वाथो निहन्ति मरुतोद्भवशूलमङ्घ्रान्
एरण्डनागरसुवर्च्चलरामठेन।
पथ्या वचेन्द्रयवनागरतोययुक्तं
हिङ्गुः सुवर्च्चलयुतश्च निहन्ति शूलम्॥

हिङ्गु नागरषड्ग्रन्था यवानी चाभया त्रिवृत्।
विडङ्गं दारु चव्यञ्च तुम्बुरुं कुष्ठमुस्तकम्॥
हवुषाकलसी रास्ना वत्सका भद्रालभा।
शतावरी वृहत्यौ च त्वगेला पञ्चजीरकम्॥
पुष्करं तिन्तीडिकञ्च वृक्षाम्लं चाम्लवेतसम्।
द्वौ क्षारौ पञ्चलवणं समञ्चैकत्र मिश्रयेत्॥
मन्त्रेण भावनाञ्चैकां दत्त्वा छायाविशोषितम्।
वीजपूरकतोयेन भावयेच्च दिनत्रयम्॥
विडालपदिकामात्रां युञ्जीत शूलशान्तये।
वाते चोष्णोदकेनापि पित्ते शर्करयान्वितः॥
मद्येन त्रिफलाक्वाथः श्लेष्मरोगे प्रशस्यते।
शूलानाहविबन्धानां मन्दाग्नौ गुल्मविद्रधौ॥
प्लीहोदराणाञ्च पाण्डुज्वरिणां च विशेषतः।
निहन्ति देहसङ्घातं मेघवृन्दं मरुद् यथा॥

वृहत् हिङ्गुचूर्णम्।

इति वातशूलचिकित्सा।

धात्रीफलं लोहरजश्च पथ्या व्योषं समांशेन विभाव्य तत्तु।
रसेन वा दाड़िममातुलुङ्गाच्चूर्णं सिताढ्यञ्च सपित्तशूले॥
विड़ालकं दाड़िमपूतना च धात्रीसमेतं विदधीत चूर्णम्।
तन्मातुलुङ्गस्य रसेन भावितं सपित्तशूलस्य शमाय भक्षेत्॥

जीवन्त्याद्यं घृतं पाने चीरं वापि सितान्वितम् ।
नित्यं विरेचनं कार्य्यं पित्तशूलनिवारणम् ॥
शिशिरसरसि तोये गाहनं चन्दनानि
विशदपुटितमध्ये शायनं वै निशासु ।
कनकरजतकांस्याम्भोज हैमं तुषारं
क्रतमिति विधिना वै पैत्तिके शूलहेतोः ।
सितशाल्योद्भवा लाजाः सितामधुयुतं पयः ।
दाहं पित्तज्वरं छर्दिं सद्यः शूलं निहन्ति च ॥
जाङ्गलानि च मांसानि भोजनार्थे प्रशस्यते ।
घृतं चीरं समधुरं प्रशस्तं पित्तशूलिनाम् ॥

इति पित्तशूलचिकित्सा ।

लङ्घनं वमनञ्चैव पाचनं श्लेषशूलिनाम् ।
लवणातिमधुराणि शयनञ्च विवर्जयेत्कम् ॥
विल्वाग्निमन्थत्रिवृपचित्रकनागराश्च
एरण्ड हिङ्गुसह सैन्धवकं समांशम् ।
क्वाथो निहन्ति कफजोद्भवशूलमेव
सद्यो निहन्ति जठरानलवर्द्धनञ्च ॥
मातुलुङ्गरसं धात्री रसं सैन्धवसंयुतम् ।
शोभाञ्जनकमूलस्य रसञ्च मरिचान्वितम् ॥
सक्षारमधुनोपेतं श्लेषशूलनिवारणम् ।
चतक्षयोद्भवं कासं नाशयत्याश्वसंशयम ॥
तुम्बुरु ग्रन्थिकैरण्डव्योषं पथ्याजमोदकम् ।
सक्षारलवणोपेतं चूर्णं शूले कफात्मके ॥
एरण्डविल्वबृहतीद्वयमातुलुङ्ग
पाषाणभित् त्रिकटुमूलकृतः कषायः ॥

सक्षारहिङ्गुलवणोरुवुतैलमिश्रं
श्रोण्यंसमेढ्रहृदयस्तनकुक्षिदेयम् ॥

इति श्लेष्मशूलचिकित्सा ।

पटोलारिष्टपत्राणि त्रिफलासंयुतानि च ।
क्वाथं मधुयुतं पानं शूले पैत्ते समीरणे ।
पित्तज्वरतृषादाहरक्तपित्तनिवारणम् ॥
दुरालभा पर्पटकञ्च विश्वा पटोलनिम्बाम्बुदतिन्तिडीकम् ।
सशर्करं कल्कमिदं प्रयोज्यं सपित्तवातोद्भवशूलशान्त्यै ॥

इति वातपित्तशूलचिकित्सा ।

सौवर्चलं समशठी सहनागरा च
शुण्ठीयुतेन क्वथितेन जलेन चूर्णम् ।
पीतं निहन्ति सकला पुत-गौल्मिकाणां
पार्श्वार्तिशूलजठरानलहृत् प्रशस्तम् ॥
शाक नागरकं वासाहिङ्गु सौवर्चलान्वितम् ।
क्वाथो वातकफे शूले चामेऽजीर्णे निरत्ययः ॥

इति वातश्लेष्मशूलचिकित्सा ।

पलाशकदलीवामापामार्गकोकिलाक्षजम् ।
गोमूत्रेण श्रितं तत्तु हिङ्गुनागरसंयुतम् ॥
हितं त्रिदोषजे शूले कामला विड्विबन्धके ।
गुल्मोदराणां शमनं मन्दाग्नीनां नियच्छति ॥
गडक्षारञ्च लवणं हिङ्गु व्योषसमन्वितम् ।
उष्णोदकेन तत् पीतं हन्ति शूलं त्रिदोषजम् ॥

इति त्रिदोषजशूलचिकित्सा ।

लङ्घनं वमनञ्चैव विरेकश्चानुवासनम् ।
निरूहो वस्तिकर्माणि परिणामे त्रिदोषजे ।

चित्रकं त्रिवृता दन्ती विडङ्गं कटुकत्रयम्।
समं चूर्णं गुड़ेनाथ कारयेन्मोदकान् सुधीः॥
भक्षयेत् प्रातरुत्थाय पश्चादुष्णोदकं पिबेत्।
परिणामोद्भवं शूलं हन्ति शीघ्रं नरस्य च॥
यवानी हिङ्गुसिन्धूत्थक्षारं सौवर्च्चलाभया।
सुरामण्डेन पातव्या परिणामे त्रिदोषजे॥
हिङ्गुव्योषवचाजमोदहबुषा पथ्या यवानी शठी
जातीपिप्पलिमूलदाड़िमत्वको चव्याग्निकं तिन्तिडी
तस्मादम्ल सुवर्च्चला च यवकक्षारं तथा सर्जिका
सिन्धूत्थं विड़चूर्णकं समकृतं स्याद्बीजपूरे रसे॥
संभाव्यं सुकृतातपेन गुड़िका चाक्षप्रमाणा तथा।
कल्को वातविकारिणां प्रददतः शूलाश्मसः प्लीहकान्।
कासानाहविबन्धमेहहृदये शूलं निहन्त्याशु वै।
एष हिङ्ग्वादिको नाम सर्वशूलार्त्तिनाशनः॥
सर्ववातविकारघ्नः सर्वक्षयनिवारणः।
परिणामोद्भवं शूलं वारयत्याशुसंशयम्॥
उदावर्त्तं त्रिदोषोत्थं सर्वातिसारवारणः।
अतिसारस्तृषा मूर्च्छा ग्लानाक्षो गौरवारुचि
श्वासकासौ वमिर्हिक्का शूलस्योपद्रवा दश।
शूलस्योपद्रवं त्वष्णां भिषक्दूरे परित्यजेत्॥
क्रियानुपद्रवे प्रोक्ता भिषजा सिद्धिमिच्छता।
वर्जयेद्द्विदलं शूली तथा सघनशीतलम्॥
दधि पिच्छिलवस्तूनि दिवानिद्रां च वर्जयेत्।
शालिषष्टिकसिन्धूत्थहिङ्गुसौवीरकं तथा॥
सुरा वा गुड़शुण्ठी वा पाने श्रेष्ठा भिषग्वर।
शतपुष्पा वास्तुकश्च हितं प्रोक्तं प्रशस्यते॥

एणातित्तिरिलावाश्च क्रौञ्चाः शशकसारसाः ।
एषां मांसानि शस्तानि कथितानि भिषग्वर ! ॥

इति श्रीमदात्रेयभाषिते हारीतोत्तरीये शूलचिकित्सितं नाम अष्टमोऽध्यायः ।

---

## नवमोऽध्यायः ।

आत्रेय उवाच ।

शृणु पुत्र ! प्रवक्ष्यामि पाण्डुरोगं महागदम् ।
पञ्चैव पाण्डुरोगास्ते सम्भवन्तीह मानुषे ॥
वातिकः पैत्तिकश्चैव श्लैष्मिकः सान्निपातिकः ।
पञ्चमो लक्षणः प्रोक्तो वक्ष्ये चैषान्तु सम्भवम् ॥

दीर्घाध्वना पीडितो वा ज्वरेण रक्तस्रावैः पीडितो वा व्रणेन ।
चिन्तायासाद्रोधनाद्वै मनुष्ये चायं पाण्डुर्जायते सेवते यः ॥
क्षाराम्ल कल्यमैरेयसेवा अव्यायामान्मैथुनातिश्रमेण ।
निद्रानाशेनातिनिद्रा दिवापि योगैश्चैतैर्मृत्तिकाभक्षणेन ॥

अतिशिथिलशरीरे रोगसम्पीडिते वा
लवणकटुकषायासेवनात्स्त्रेन सङ्गैः ।
अतिसुरतमजस्रं सेवनातिक्रमेण
नयति रुधिरशोषं तेन वै पाण्डुरोगम् ॥

स्तनाक्षिकूटे श्वयथुः शरीरे पाण्डुत्वमायाति सपीतमूत्रः ।
निष्ठीवते त्वक् प्रविदीर्य्यते च सञ्जायते तस्य पुरःसराणि ॥
तोदः परुषत्वशिरोगुरुत्वं त्वङ्नखनेत्रे नखकालिमा स्यात् ।
वातात्मकं तं मनुजस्य विद्धि लिङ्गैरुपेतोऽनिलपाण्डुरोगः ॥
श्यामत्व-पीतत्व करोति लोके बिभर्त्ति शोषं कटुकास्यता च ।
मन्दज्वरो वै भृशशोषमोहः पीतच्छविः पीतभवो हि पाण्डुः ॥
तन्द्रालुता शोफकफेन युक्ता आलस्यप्रस्वेदगुरुत्वमेव ।

सञ्जायते तस्य कफात्मकोऽसौ नरस्य पाण्डुत्वभवो विकारः।
तन्द्रालस्यं श्वयथुवमथु कासहृल्लासशोषा
विड्भेदः स्यात् परुषनयने सज्वरो वै क्षुधार्त्तः।
मोहस्तृषाक्लममथ मनुजस्याशु पश्येत् सुदूरे
त्याज्यो वैद्यैर्निपुणमतिभिः सन्निपातोत्थपाण्डुः॥
मृत्तिकाभक्षणेनाथ शृणु पुत्र! गदो महान्।
पाण्डुरोगो गरिष्ठोऽपि भवेद्धातुक्षयङ्करः॥
मृद्भक्षणाच्चैव मलं प्रकोप्य स्रोतांसि रुद्धन्ति च मृत्तिकायाः।
तेनैव नास्तक् परिवर्त्तयन्ति न तर्पयन्ते वपुषं रसेन॥
क्षारात् कषायान्मधुरस्य पानात् स कोपयत्याशु नरस्य मृत्स्ना
श्लेष्मप्रकोपान्मधुरान्करोति मृत्स्ना न जग्धा हितकारिणी स्यात्
विकृतिमुपगतास्ते मारुताद्यास्त्रयस्तु
बलवदनरुचीनां नाशयन्त्याशु दोषाः।
भवति विकलगात्रं पाण्डुरोगं शरीरे
भवति जठरपाण्डुरोग आशु प्रवीणः॥
कामलान्वित गुदाकृणा पुनः सेविता विकुरुते बलं नयः।
पिप्पली च पयसा युतं निशि लोहकिट्टमधुसंयुतं पिबेत्॥
गोमूत्रमध्ये मतिमान् स्थापयेत् सप्तरात्रिकम्।
तस्मात् चूर्णन्तु मधुना देयं पाण्ड्वामयापहम्॥
त्र्यूषणं त्रिफला मुस्ता विडङ्गं चित्रकं समम्।
भागमेकं लोहचूर्णमिक्षुद्रावे विभावयेत्॥
सप्ताहमथ लोहखल्वितं पुनरपि प्रवरं स्यात्।
शीलितन्तु मधुनापि घृतेन पाण्डुरोगहृदयामयापहम्।
कामलार्शोहलीमकहारि कथितं सुमतिभिश्च पण्डितैः॥

इति लोहचूर्णवटकम्।

त्र्यूषणं त्रिफलया सह चित्रकं सैन्धवत्र्युषणदाक समांशिकम्।

ग्रन्थिकञ्च शिखिभृङ्गराजकं योजयेत् पलिकभागिकानिमान्॥
चूर्णिताद् द्विगुणमेव योजयेत् लौहचूर्णमपि कज्जलप्रभम्।
अष्टभागममूत्रकल्पितं पाचितं पुनरयो वरप्रदम्॥
सेवयेत् बलमुमक्रमं तथा तक्रसंयुतमिहास्ति शोभनम्।
नाशयेच्च कफकामलान् क्रमीन् पाण्डुकुष्ठगुदजान् हलीमकम्

इति मण्डूरवटकम्।

पुनर्नवा व्योषविडङ्गदारु चित्रकं निशाह्वयञ्चत्र्यफलत्रयं तथा।
घनायवानितिक्तकरोहिणीसमा द्विभागिकं लौहरजो विमिश्रयेत॥
गवां पयो वा द्विगुणं वियोज्यं दार्व्या प्रलेपं विदधीत धीमान्।
छायाविशुष्का गुटिका विधेया क्षौद्रेण वा गोमथितेन भक्षयेत्॥
ज्ञात्वा बलं रोगबलं नरस्य पाण्डामये कामलमर्वमेहे।
गुल्मोदराजीर्णविसूचिकानां शोथातिसारग्रहणीविबन्धान्॥
शूलक्रिमीनर्शविकारहेतोः सपञ्चकोलं त्रिफला घनञ्च।
देवदारुक्रमिशत्रुकोलकं एष भागसहितो वियोजितः॥
मिश्रयेत् तदनु चायसं रजस्तत्र चाष्टगुणमूत्रमध्यतः।
पाचयेद्भवति यावदलेपिका कारयेद्बदरमात्रया पुनः॥
छायया विपितञ्च विशोषणं कारयेत् सुरभिमथितेन च।
पानकञ्च शमयेत् सकामलं पाण्डुशोफमतिसारमद्भुतम्॥
शोषमेहमुरजान् क्रिमीनपि वातगुल्ममतिदारुणं तथा।

इति वज्रमण्डूरवटकः।

धात्रीफलानां रसप्रस्थमेकं प्रस्थं तथा चेक्षुरसं विदध्यात्।
प्रस्थन्तु कूष्माण्डरसप्रदिष्टं चार्कं रसं प्रस्थविमिश्रमेकम्॥
एकीकृतं मन्दहुताशनेन पाच्यं भवेत् व्यापदशेषमेति।
विमिश्रयेदौषधमङ्गमेतत् पलैकमात्रं विपचेच्च पश्चात्॥
शृङ्गीसुराह्वं शतपुष्पधान्यं सुगन्धशुण्ठीमधुकं विशाला।
सपिप्पलीकं सकटुत्रयञ्च विडङ्गमुस्ताह्वपा पलानि॥

दार्वीहरिद्राकटुरोहिणीनां दुरालभापौष्करवत्सकानाम् ।
कुष्ठाजमोदासुरसादलानि चूर्णं त्वमीषां विनियोजनीयम् ॥
गुडं पुराणं द्विगुणन्तु मध्ये घृतेन चैवं वटिकां विबन्धयेत् ।
भक्षणाज्जयति कामलार्शसं पाण्डुरोगमतिदारुणज्वरान् ।
शोथशोषग्रहणीं विजघ्नति वातातिसारक्षयकासगुल्मान् ॥

इति अमृतवटक

गोधूमशालियववषष्टिकमुद्गकानां
श्यामाढकीघृतयुतं सपयः सतक्रम् ।
गाण्डीरवास्तुकमथो शतपुष्पवर्त्ता
पथ्यं हितं निगदितं मनुजस्य पाण्डौ ॥
शाल्यन्नमुद्गगोधूममसूराश्चाढकी यवाः ।
जाङ्गलानि च मांसानि भोजने च प्रशस्यते ॥
तिक्तानि रूक्षाणि कषायकाणि
तीव्राणि दाहान्यपि काञ्जिकानि ।
सुराम्लसौवीरकवीजपूरान्
तैलानि वर्ज्यानि च पाण्डुरोगे ॥

इति श्रीमहर्षिविप्रभाषिते हारीतोत्तरीये पाण्डुरोगचिकित्सा नाम नवमोऽध्यायः ।

---

## दशमोऽध्यायः ।

आत्रेय उवाच ।

अथातः क्षयरोगचिकित्सितं व्याख्यास्यामः ।

शृणुत गुणगरिष्ठ ! व्याधिघोरं नराणां
भवति रहितचेष्टो वातुलःप्राणिनां वै ।
चिरनिरयकरोऽयं प्राकृतैः कर्मपाकै-
रिह परिभवकारी मानुषस्य क्षयोऽयम् ॥

देवानां प्रकरोति भङ्गमथवा भ्रूणस्य सम्पातनम् ।
गोपृथ्वीधरविप्रबालहननञ्चारामविध्वंसनम् ॥
योऽयं स्थानविनाशनञ्च कुरुते स्त्रीणां बधं यो नरः ।
तस्यैतैर्गुरुकर्मभिः चयगदो देहार्थहारी महान् ॥
देवानां दयतो धनञ्च दहतो भ्रूणप्रपातेऽपि च ।
देवत्वं हरतो विषञ्च ददत आरामकं निघ्नतः ॥
तेनासौ नियमेन सम्भवति वै नृणाञ्च तीव्रा रुजा ।
धातूनां चयकारिणी च मनुजस्यात्यापदा दारुणा ॥
चयो दशविधश्चैव विज्ञातव्यो भिषग्वरैः ।
श्रान्त्या भाराद् विषमशयनैर्दीर्घमार्गाक्रमैर्वा ॥
भुक्तेर्दोषार्दतिशयभरतः सेवनाद्वै नरस्य
व्रणगातिक्रान्तो विषमशयनात् कूटनपरैः ।
जाता रोगा मनुजवपुषः क्षीणतां संनयन्ति
रोगाक्रान्ता विषमशयनात्तस्य मन्दज्वराद्वा ॥
श्लेष्मा पित्तं मरुच्चैव शनैर्याति देहक्षयं वा ।
रसरक्तमांसमेदश्चास्थि मज्जानि शुक्रतः ॥
एवं दशविधा ज्ञेयाः क्षया नृणां वपुःषु च ।
पुनश्च लक्षणान्येषां वक्ष्यते शृणु साम्प्रतम् ॥
अतिस्वेदादिघर्मेण चिन्ताशोषभयादिना ।
वाताद्यैः सेवितैश्चापि जायते मारुतक्षयः ॥
तेन तन्द्राङ्गदाहश्च पिपासारुचिवेपथुः ।
श्रमः क्लमो भ्रमश्चैव भवेच्च मारुतक्षये ॥
तस्मादिमानि सेव्यानि रसानि पललानि च ।
रसोनादिककल्कञ्च सेवयेद्वातवर्द्धनम् ॥
पित्तक्षयेऽग्निमान्द्यञ्च जायतेऽरुचिजाड्यता ।
कासहृल्लासशोफश्च जायते मन्दचेष्टता ॥

स्वेदाभ्यङ्गान्नपानानि दीपनानि प्रयोजयेत् ।
जाङ्गलानि रसान्नानि सेवयेत् पित्तकृत् क्षये ॥
व्यायामे च व्यवाये च रूक्षान्नाहारसेवनैः ।
सन्तापक्रोधनैश्चापि जायते कफसम्भवः ॥
तेन दाहोऽथवा पाण्डुः शोषो निःश्वसनभ्रमः ।
विनिद्रताक्षुत् तृषा च स्त्रीसङ्गं नाभिनन्दति ॥
तस्य शीतान्नपानानि कन्दशाकादिकैः रसैः ।
आनूपैर्दधिदुग्धैर्वा सेवनं न समीहितम् ॥
त्रिभिर्दोषैः क्षयं प्राप्तैस्तदा हि मरणं ध्रुवम् ।
तस्य क्रिया प्रयोक्तव्या साधारणा महामते ! ॥
अथ धातुक्षयं वक्ष्ये हारीत ! शृणु साम्प्रतम् ।
रसरक्तमांसमेदः प्रत्येकं क्षयलक्षणम् ॥
रसक्षयेऽतिशोषश्च मन्दाग्नित्वञ्च वेपथुः ।
शिरोरुक् मन्दचेष्टत्वं जायते च क्लमो भ्रमः ॥
रक्तक्षये क्षयः पाण्डुर्मन्दचेष्टो भवेन्नरः ।
श्वासनिष्ठीवनं शोषो मन्दाग्नित्वं च जायते ॥
मांसक्षयेऽतिकृशता चेष्टनञ्चाङ्गभङ्गता ।
निद्रानाशोऽतिनिद्रास्य विसंज्ञा लघुविक्रमः ॥

मेदः क्षये मन्दबलो विसंज्ञता चाङ्गस्य भङ्गो वमनं परुषता ।
श्वासातिकासोऽरुचिताग्निमन्दता विशोषकम्पो वपुषश्च शुष्कता
अस्थिक्षये स्यादतिमन्दचेष्टता मन्दञ्च वीर्यं खलु मेदसः क्षये
विसंज्ञता स्यात् कृशता च कम्पनं अङ्गस्य भङ्गो वमनं परुषता
शोषश्च देहे सदनञ्च शोफिता विकम्पनं शोषरुजा च जायते ।
भिषग्वरस्तत् परिवेद लक्षणं मज्जाक्षये कम्पनमेव जायते ॥
भ्रमः क्लमः स्यादतिमन्दचेष्टः शोफो निशाजागरणञ्च तन्द्रा ।
मन्दज्वरः शोषसमो मनुष्ये शुक्रक्षये चाल्पविचेष्टितानि ॥

रूक्षे भ्रमः कम्पनशोषरोषः क्षीर्णिषतादीनि विरूपता च ।
इदानीं संप्रवक्ष्यामि भेषजानि यथाक्रमम् ।
स्नेहनं रूक्षणञ्चैव तथा विम्लापनं हितम् ॥
जाङ्गलानि च मांसानि भोजनानि च सेवयेत् ।
गुडूचो शृङ्गवेरञ्च यवानीक्वथितं जलम् ॥
मरिचैः क्वथितं दुग्धं पाने रात्रौ प्रशस्यते ।
रसानां तेन वृद्धिः स्यात् शोथं तस्माद् विमुच्यते ॥
रसानां वृद्धिकरणं गोधूमयवशालिभिः ।
क्वथितानि भिषक्श्रेष्ठैर्जाङ्गलानि विशेषतः ॥
घृतदुग्धसिताक्षौद्रमरिचानि च पिप्पली ।
पानं शस्तं मनुष्याणां रक्तवृद्धिकरं परम् ॥

इति रक्तवृद्धिकरम् ।

आनूपानि च धान्यानि लशुनामानि कल्पयेत् ।
अल्यांश्च घृतदुग्धादीन् सेवयेन्मधुराणि च ॥
हिता रसा जाङ्गलाश्च सेवनार्थं भिषग्वर ! ।
सितोपलादिकं चूर्णमजाक्षीरं सकोलकम् ।
हितं पानं क्षये चैव प्रकल्प्य प्रातराशने ॥

इति मेदोवृद्धिकरणम् ।

घृतानि च सुपक्वानि क्षीराणि विविधानि च ।
चन्दनानि च द्राक्षादिचूर्णानि च भिषग्वर ! ॥
जाङ्गलानि च सर्वाणि सेवनीयानि पुत्रक ! ।
अन्नानि मधुराणीह सर्वाणि च प्रयोजयेत् ॥

इति अस्थिवृद्धिकरणम् ।

शुक्रक्षये प्रपाकानि रसानि च विशेषतः ।
नवनीतं तथा क्षीरं मधुराणि च सेवयेत् ॥

कर्कटीमूलपयसा विदारी कन्दशाल्मली ।
सिताढ्यं च हितं पानं शस्यन्ते मधुराणि च ॥

इति शुक्रक्षयवृद्धिकरणम्

इदानीं चूर्णानि वक्ष्यन्ते ।

बलाविदारीलघुपञ्चमूली क्षीरद्रुमत्वक् च ततः प्रयोज्या ।
पुनर्नवा मेघतुगारजन्यः सञ्जीवनीयैर्मधुकैः समांशैः ॥
अक्षप्रमाणानि समानि तानि सर्वाणि चैतान्यपि चूर्णयित्वा
विमिश्रयेत् तत्र कणाशतानि यवान्नगोधूमतिलांश्च पिष्ट्वा ॥
तुगासमांशं सितखण्डलानां पेयं सुशृङ्गाटकमिश्रितन्तु ।
प्रकीर्णकार्द्धेन विशोजनीयं समाशर्करापि सिता प्रयोज्या ॥
विभावयेच्चामलकीरसेन वारत्रयं गोपयसा विभाव्य ।
ततोऽस्य सर्वैः सह शर्करायां घृतेन चैवं पुनरेव भाव्यम् ॥
तं भक्षयेत् क्षौद्रयुतं पलार्द्धं जीर्णे च भोज्यं कटुकाम्लवर्ज्यम्
क्षीरं घृतं वा सितशर्करां वा यवान्नगोधूमकशालिभक्ष्यान् ।
ज्ञात्वाग्निपाकं जठरे नरस्य देयो विधिः क्षयरोगशान्त्यै ।
बलक्षये श्वासविकारसितापसपीडितानाञ्च तथा शिरोऽर्त्तौ ॥
पित्तातुराणां रुधिरप्रकोपे श्वासाध्मसंपीडितकामलानाम् ।
श्वासातुराणां मधुमेहिनाञ्च क्षीणेन्द्रियाणां बलकारि शस्तम्
गर्भो गृहीतो न यया स्त्रिया च तस्याः प्रशस्तन्तु बलादिचूर्णं

इति बलादिचूर्णम्

बिल्वाग्निमन्थश्योणाकाः काश्मरी पाटली तथा ।
शालिपर्णी पृश्निपर्णी श्वदंष्ट्रा बृहतीद्वयम् ॥
शृङ्गी शिवा तामलकी जयन्ती पुष्कराद्वयम् ।
द्राक्षाभयामृतामेदा चन्दनागुरुपद्मकम् ॥
बलाद्वयास्तु कर्णं द्वे जीवकर्षभकावुभौ ।
काकोली क्षीरकाकोली विदार्य्याः कन्दमांसकम् ॥

सर्वेषां पलिका मात्रा योजयेद्भिषजांवरः।
धात्रीफलं पञ्चशतं सुपक्वरससंयुतम्॥
जलद्रोणे विपक्तव्यं चतुर्भागावशेषितम्।
तथा निर्वाप्य मतिमान् कल्कानि च समुद्धरेत्॥
तत् क्वाथं कल्कयेत् तावत् यावद्दर्वीप्रलेपकः।
पुनस्तैलेन चाज्येन पक्वा चामलकीफलान्॥
पाचितान् चूर्णितान् सर्वान् समशर्करया युतान्।
चतुःपलतुगाक्षीरीं योजयेद्भिषजांवरः॥
पिप्पलीनां सहस्रैकं त्वगेलापत्रकं तथा।
एषां द्विपलिकां मात्रां विदध्यात् तु भिषग्वरः॥
सर्वप्राक् कथिते लेहे योजयेच्च विचूर्णितम्।
सादरेण सम लिह्यात् नराणाञ्च रसायनम्॥
क्षयपाण्डु, श्वास कास-कासजाना विशोषणम्।
क्षीणक्षतानां बालानां वृद्धानां देहवर्द्धनम्॥
स्वरभङ्गपिपासानां हृद्रोगं पित्तशोणितम्।
शुक्रदोषं शिरोरोगं पीनसञ्चापकर्षति॥
जीर्णज्वरञ्च मन्दाग्निं कुष्ठं दुष्टं भगन्दरम्।
मेह कृच्छ्राश्मरीं छर्द्दि तथाऽरोचनवारणम्॥
हृद्रोगं शूलमानाहं नाशयत्यप्यसंशयम्।
वन्ध्यानां पुत्रजननं वृद्धानामल्परेतसाम्॥
षण्ढोऽपि जायते चैव सदा धातुकरः परः।
मेधास्मृती तथा तेजो वर्द्धयत्याशु निश्चितम्॥
सौख्यसौभाग्यदर्शी च वृद्धोऽपि तरुणायते।
क्षयरोगविनाशाय कथितञ्चात्रिणा महत्॥
च्यवनप्राशनं नाम कृष्णात्रेयेण भाषितम्।

इति च्यवनप्राशनो नामावलेहः।

भार्गी पुष्करमूलचित्रककणामूलं गजाह्वा शठी
शङ्खाह्वा दशमूलचित्रकबला वासात्मगुप्तास्तथा।
एतेषां द्विपलांशकौ सुभिषजा पक्वा तु पञ्चाढके
पथ्यानां शतकं विपाच्य बहुधा मन्दाग्निना तत् पुनः॥
निर्वाप्यं पुनरेव पूर्वसरमञ्चोद्धृत्य पथ्याशतं
संन्यस्य त्वतिशीतले सुभवने क्वाथः प्रशस्तः पुनः।
दत्त्वा जीर्णगुडस्य चैककुडवं क्षौद्रं घृतं तुलया
स्नेहस्यार्द्धमथात्र्कंण मगधा योज्यं शतं पञ्चकम्॥
चूर्णं तत्र निधापयेत् पुनरथो सङ्घट्टयेदुच्चकं
पथ्ये द्वे मधुना सहैव हितकृत् सर्वामयोच्छेदनः।
पाण्डुं कामलरोमकं गुदरुजो हृद्रोगहिक्काभ्रमान्
हन्यात् पीनससंसर्पपित्तरुधिरं कुष्ठं ग्रहण्यामयम्॥
पुष्पञ्चैव तनोति शोफमरुचिं गुल्माग्निराजक्षय
मेहानाहविबन्धरोगशमनं चोर्णेन्द्रियाणां हितम्।
मन्दाग्नेः प्रशमं करोति वडवातुल्योऽरुचेर्बन्धको
नाशं वा विदधाति देहसुखदागस्त्यप्रणीताभया॥

दुग्धगम्यहरीतकीपाकः।

बलाद्वयं गोक्षुरकौ बृहत्यौ निःक्वाथ्य दुग्धेन कणासमेतम्।
पानं हितं स्यान्मधुना सिताढ्यं विनाशनं कामलकं क्षयं वा।
मेहस्य तृष्णामयनाशकारि चोर्णेन्द्रियाणां बलमातनोति॥

पिप्पली वर्द्धमानं वा कारयेद् दुग्धसर्पिषा।
आद्यः पञ्च पुनः सप्त पुनरेव नव क्रमात्॥
एकादशस्त्रयोदशः पञ्चदशस्तथा सप्तदशः स्मृतः।
एकोनविंशो द्वाविंशः पृथक् पृथक् यथाक्रमम्॥
एवं क्रमेण वृद्धिः स्यात् कारयेत् शतमात्रया।
तत्क्रमेण पुनः पश्चात् यावत् शेषञ्च पञ्चकम्॥

भोजयेत् षष्टिकान्नन्तु मुद्गसर्पिः समायुतम्।
एवं बालस्य वृद्धस्य नरो नागबलो भवेत्॥
पिप्पलीवर्द्धमानन्तु ज्वरे जीर्णे प्रशस्यते।
मन्दाग्नौ पीतमेवाथ गुदजे वा तथा पुनः॥

इति पिप्पलीवर्द्धमानम्।

द्वे पले मार्कवं धातु साचकञ्च पुनर्नवा।
तुगा पृक्का शालिपर्णी वासकञ्च दुरालभा॥
चूर्णार्द्धेन समं योज्यं त्रिगन्धं मरिचानि च।
तालीशं मगधा चैव तदर्द्धेन शिलोद्भवम्॥
शिलाभेदं तदर्द्धेन सर्वञ्चैकत्र मिश्रयेत्।
समेन तिलचूर्णन्तु शर्कराभिः समायुतम्॥
भक्षयेत् क्षीरपानं वा शस्यते घृतसंयुतम।
तेन क्षयो राजयक्ष्मा कामला च विनश्यति॥
अपस्मारं जयत्याशु बलवीर्य्याधिको भवेत्।
शाम्यन्ति च महारोगाः शुक्राढ्यो जायते नरः॥

इति शिलाजतुचूर्णम्।

जीवन्तिकावत्सकयष्टिकानां सपौष्करं गोक्षुरकं पले द्वे।
नीलोत्पलं तामलकीयवासं सत्रायमाणा मगधा च कुष्ठम्॥
द्राक्षामलक्या रसप्रस्थमेकं प्रस्थद्वयं छागलकं पयश्च।
प्रस्थेन दध्ना विपचेद् घृतञ्च पाने प्रशस्तन्त्विदमेव भोज्ये॥
नस्ये च वस्तावपि योजयेत् तत् विनाशमायात् सकलामयश्च।
विनाशमित्याशु च राजयक्ष्मा हलीमकः कामलपाण्डुरोगः॥
मूर्च्छाभ्रमः कम्पशिरोऽर्त्तिशूलं महाश्मरी वा गुदकीलकुष्ठम्।
शिरोगतो नाशमुपैति रोगः तस्य प्रदानेन वियोजितेन॥
पानेन पाण्ड्वामयराजयक्ष्मा नाशं समायाति हलीमको वा।
वस्तिप्रदानेन गुदोद्भवश्च रोगो विनाशं समुपैति पुंसाम्॥

विसर्पविस्फोटकमस्त्रचणेन नाशं नृणां यान्ति गदाः समस्ताः ।

इति जीवन्त्याद्यं घृतम्

कणा पलांशश्च पचेत् समांशमाजं घृतं पञ्चगुणं पयश्च ।
पानेऽथवा भोजनके प्रशस्तं देयञ्च राजक्षयनाशहेतोः ॥

इति पिप्पल्याद्यं घृतम्

पञ्चकोलं यवांशञ्च क्षीरं दध्ना घृतं पुनः ।
समांशेन तु योज्यानि भार्गीकुष्ठन्तु पौष्करम् ॥
शतं तत्र हरीतक्या जले चैव चतुर्गुणे ।
क्वाथयेत्कल्कसयोज्य क्वाथयेन्मृदुवह्निना ॥
मृदुपाकं घृतं सिद्धं पाने नस्ये च वस्तिषु ।
गुणाधिक्यं भवेन्नृणां पाण्डुरोगे हलीमके ।
राजयक्ष्माणि संक्षीणे शस्तं चोक्तं भिषग्वरैः ॥

इति पञ्चकोलाद्यं घृतम्

यष्टीबला गुडूची च पञ्चमूलं समांशकम् ।
क्वाथेन सदृशं धात्रीरसं चेक्षुरसं तथा ॥
विदार्य्याश्च रसं चैव घृतञ्च समभागिकम् ।
क्षीरं दधिसमञ्चात्र नवनीतन्तु तत्समम् ॥
द्राक्षा तालीशसंयुक्तं यथालाभेन योजयेत् ।
सिद्धं घृतं च पानाय नस्ये वस्तौ प्रदापयेत् ॥
जयन्ति राजयक्ष्माणं पाण्डुरोगं सुदारुणम् ।
हलीमकञ्चाशसाञ्च रक्तपित्तनिवारणम् ।
लेपेन दुष्टवीसर्पं पित्तदुष्टव्रणापहम् ॥

इति पाराशरं घृतम्

बलाश्वदंष्ट्रा बृहतीद्वयञ्च पर्णीद्वयं गोक्षुरकं स्थिरा च ।
पटोलनिम्बस्य दलानि मुस्तं सत्रायमाणा सदुरालभा च ॥
कृत्वा कषायञ्च पदावशेषं पूते ततश्चूर्णमिदं प्रयुञ्ज्यात् ।

द्राक्षा शठी पुष्करमूलधात्री दुग्धं समं तामलकी कषायम् ॥
सर्पिः प्रयुक्तं नवनीतकञ्च सर्पिस्तदर्द्धेन वियोजनीयम् ।
सिद्धं घृतं पानमथैव वस्तौ नस्ये तथाभ्यञ्जनभोजने च ॥
सपाण्डु कासक्षयकामलानां राजक्षये क्षीणबलेन्द्रियाणाम् ।
क्षतेषु शोफेषु व्रणेषु शस्तं शिरोऽक्षि पार्श्वाक्षिगुदामयघ्नम् ॥

इति बलाद्य तैलम् ।

चन्दनं सरलं दारु पथ्यैला वालकं शठी ।
नलशैलेयकं पृक्का पद्मकं नागकेशरम् ॥
कक्कोलकं सुरामांसी शैलेयं द्वे हरीतकी ।
रेणुकात्वक् कुङ्कुमञ्च शारिवे द्वे निशा गुरु ॥
बला द्राक्षा च नलिका कषायं सुपरिस्रुतम् ।
तैलमस्तु तथा लाजा रसेन समभागिकम् ॥
मन्दाग्नीनां पचेत्तैलं सिद्धं पाने च वस्तिषु ।
नस्ये चाभ्यञ्जने चैव योजयेत्तं भिषग्वरः ॥
हन्ति पाण्डु क्षयं कासं ग्रहघ्नं बलवर्णकृत् ।
मन्दज्वरमपस्मारकुष्ठपामाहरं पुनः ॥
करोति बलपुष्ट्योजः प्रज्ञायुर्बलवर्द्धनम् ।
रूपसौभाग्यदं प्रोक्तं सर्वभूतयशस्करम् ॥

इति चन्दनाद्यं तैलम् ।

इति क्षयरोगचिकित्सा ।

स्वामिभार्य्याभिगमनाद् गुरुपत्न्यभिलाषणात् ।
राजस्वर्हेमचौर्य्याद्वा राजयक्ष्मा भवेत् गदः ॥
अथवा दुष्टरोगेण जायते शृणु साम्प्रतम् ।
चतुर्भिर्हेतुभिर्यक्ष्मा जायते शृणु पुत्रक ! ॥
व्यायामयान-सुरता-गतिपीड़िताङ्ग-
रोगेण वा व्रणनिपीड़ित-क्षीणदेहात् ।

क्रोधातिशोकविषमाशनकोपवासैः
सञ्जायते च मनुजस्य महागदोऽयम् ॥
बाह्वक्यान्यो भवति च नितरां ज्याधनुःकर्षणेन
भारात्यर्थं भवति हननोत्पातबन्धेन युद्धात्।
दूराद्धानाद् कदशनवशाच्चिन्तयातिव्यवायात्
संभूतिः स्यान्मनुजबलहृत् राजयक्ष्मेति संज्ञः ॥

क्षतक्षयात् श्रमाद्वापि सहसोत्प्लवनादपि।
व्यवायातिप्रसङ्गेन तथा रूक्षातिसेवनात्॥
तेन संक्षीयते गात्रं ज्वरो मन्दश्च जायते।
ज्वरान्ते जायते शोफो मलविट् चातिमूत्रता॥
अतिसारश्च भवति भक्षणेनाधिकेन च।
कासते ष्ठीवतेऽत्यर्थं शोषञ्च कुरुते भृशम्॥
स्त्रियोऽभिलाषतात्यर्थं वार्त्तायाः द्विषता पुनः।
राजयक्ष्मेति विज्ञेयो नरः साध्यो न विद्यते॥
यस्य पादौ भवेतां तु शोफश्च बहु मन्यते।
शब्दे च पटुता यस्य राजयक्ष्मा न जीर्य्यति॥
यदन्नं यत् समाहारं यादृशं प्रतियाचते।
तत्तस्य च प्रदातव्यं मधुरं घनमेव च॥
यद्यदाहारमिच्छेद्वा नरो हि राजयक्ष्मिकः।
तस्य तस्याप्यलाभेन क्षीयन्ते तस्य धातवः।
यदा सरक्ताः शोफास्तु पाकतां यान्ति मानवे॥
तदा पुनर्नवाक्वाथः सलेशः प्रविधीयते।
स जीवेच्चतुरो मासान् षण्मासं वा बलाधिकः॥
उत्कृष्टैश्च प्रतीकारैः सहस्राहन्तु जीवति।
सहस्रात् परतो नास्ति जीवितं राजयक्ष्मिणः॥
गतप्राणबलौजश्च क्षीणश्च विकलेन्द्रियः।

न भवेत् पुनरुच्छ्रायो याप्यरोगश्च मुञ्चति॥
यस्तदायामसम्पन्नो भूयोऽपि कामना भवेत्।
तदा प्राणापहारी स्यात् राजयक्ष्मातिदारुणः॥
त्रिभिर्मासैश्च षण्मासैर्वर्षैश्चापि त्रिभिः पुनः।
शतमूलीरसे प्रस्थं गुडूचीकल्कप्रस्थकम्॥
हरीतकीशतानाञ्च कुटजस्य त्वचा तुलाम्।
निःक्वाथ्य च पृथक्त्वेन पूते चैकत्र मिश्रयेत्॥
दार्वीप्रलेपनं दृष्ट्वा गुडानां शतपञ्चकम्।
सितं चामलकीचूर्णं त्वगेलाचित्रकं शठी॥
द्राक्षा कुष्ठं शिलाजिच्च शिलाभेदस्तु तालकम्।
योज्यं तत्राक्षमानेन भक्षयेत् सितसर्पिषा॥
तस्योपरि पिबेत् क्षीरं भोजनञ्च ततःपरम्।
राजयक्ष्मी लभेत् सौख्यं पाण्डुकामलकान् जयेत्।
अतिसारं निहन्त्याशु वले नागवली भवेत्॥

इति अमृतप्राशनम्।

तालकं च शिलाभेदस्तथा चैव शिलाजतुः।
जीरके द्वे समङ्गा च कुष्ठं नागबला बला॥
एलापत्रकतालीशं तमालं हरिचन्दनम्।
मुस्ता द्राक्षा तथा रास्ना मुण्डी शैलेयकं मुरा॥
सुरसा चैव संयोज्या तिलाः कृष्णा द्विकोन्मिताः।
चूर्णं सूक्ष्मं प्रयुञ्जीत गुड़ेन मधुना युतम्॥
पश्चात् गोक्षीरपानं स्यात् क्षीरेण सहभोजनम्।
राजयक्ष्मादिभिः क्षीणा ग्रहणीपीडिताश्च ये॥
धातुक्षीणबला ये च तेषां संयोजयेत् भृशम्।
वृद्धोऽपि तरुणो भूत्वा नरो नार्य्याऽभिनन्दति॥
बन्ध्यापि लभते पुत्रं षण्ढोऽपि पुरुषायते।

तालकामृतकन्नाम कृष्णात्रेयेण भाषितम् ॥

इति तालकामृतकम्

गुडूची च वली द्वे च धात्री च मरिचानि च।
चूर्णं गुडेन संयुक्तं राजयक्ष्मापहं नृणाम् ॥
शालिषष्टिकगोधूम वास्तूकं जाङ्गलानि च।
मुद्गाश्च गोपयश्चैव शशकैणकुरङ्गिणाम् ॥
तित्तिरकाञ्चनावानां वार्त्ताकुः कपिकच्छुकः।
क्वथितानि च मांसानि प्रलेपानि हितानि च ॥
भोजयेत् क्षीरसर्पिश्च क्षये वा राजयक्ष्मिणः।
क्षाराम्लकटुकं तीक्ष्णं तैलं सौवीरकं सुरा ॥
राजिकावर्जिता चैते क्षये वा राजयक्ष्मिणः।

इति क्षयरोगचिकित्सा

इति श्रीमहर्षिप्रभाषिते हारीतोत्तरे तृतीयस्थाने क्षयरोगचिकित्सा नाम दशमोऽध्यायः।

---

## एकादशोऽध्यायः।

अथ रक्तपित्तं व्याख्यास्यते।

अतिघर्मातपाद्वाततीक्ष्णोष्णकटुसेवनात्।
क्षाराम्लसेवनाद्वापि मद्यपानातिसेवनात्।
अतिव्यवायाच्छीतेन शुष्कशाकादिसेवनात् ॥
एतैस्तु कुपितं पित्तं रक्तेन सह मूर्च्छितम्।
पुत्रस्तु संशयापन्नः पप्रच्छ पितरं पुनः ॥

हारीत उवाच।

कथं पित्तं प्रकुपितं केन चापि प्रचाल्यते।
तद्वद्रक्तस्य कोपोऽपि जायते केन हेतुना ॥
युगपत् दृश्यते केन केन वापि प्रवर्त्तते।

एवं पृष्टो महाचार्य्यः प्रोवाच मुनिपुङ्गवः ॥

आत्रेय उवाच ।

शृणु पुत्र ! महाप्राज्ञ ! चिकित्सागमपारग ! ।
येनैव कुप्यते पित्तं तेनैव कुप्यते तथा ॥
तावत् प्रकुपिते कोष्ठे वायुर्दारयते भृशम् ।
ऊर्द्ध्वञ्च नयते प्राणः समानापानमीरयेत् ॥
मध्ये समानः कुरुते रक्तपित्तस्य कोपनम् ।
एवं युगपत् पित्तञ्च रक्तेन सह कुप्यति ॥
चतुर्द्धा दृश्यते कोपो गतिश्चास्य द्विधा मता ।
ऊर्द्ध्वं श्लेष्मणि संसृष्टं नासास्ये कर्णरन्ध्रयोः ॥
रक्तं प्रवर्त्तते यस्य साध्यन्तु विजिगीषुणा ।
अधःपानेन संसृष्टं गुदेनापि प्रवर्त्तते ॥
विज्ञेयं रक्तपित्तन्तु कृच्छ्रेण सिद्धिमिच्छति ।
उभाभ्यामत्र ऊर्द्धाभ्यां वातश्लेष्मणि वर्त्तते ॥
तदसाध्यं विजानीयात् कृच्छ्रेण यदि सिध्यति ।
एकमार्गगतो वापि नातिवेगेन चोत्थितम् ॥
रक्तपित्तं सुखेनापि साध्यं स्यान्निरुपद्रवम् ।
एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ।
असाध्यन्तु त्रिदोषेषु रक्तपित्तं प्रवर्त्तते ।
ऊर्द्धगे रक्तपित्ते च विरेकं कारयेत् सुधीः ॥
अधोभागगते रक्ते तदास्य वमनं हितम् ।

रोगक्षीणः स्थविरविकले क्षीणदौर्बल्यकाये
मन्दाग्निर्वा वमथुरथवा पाण्डुता दाहशोषः ।
तृष्णा छर्दिः श्वसनमरुचिर्भक्तविद्वेषमोहौ
हृत्पीड़ा स्यात् भ्रममथ भवेद्रक्तपित्तोपसर्गात् ॥

अष्टादश इमे प्रोक्ता रक्तपित्त उपद्रवाः ।

उपद्रवैर्विना साध्योऽसाध्यः सोपद्रवस्तथा ॥
रक्तनिष्ठीवनापेतो रक्तनेत्रो भ्रमातुरः ।
रक्तमूत्रश्च वमते रक्तमूत्रो न जीवति ॥
एवं प्रोक्तो निदानार्थस्ततो वक्ष्यामि भेषजम् ।
सुलक्षणसमायुक्तं रक्तपित्तं सुखावहम् ॥

यस्यारुणं भवति फेनयुतञ्च तावत्
पित्तातिकृष्णमथ पीतकुसुम्भकाभम् ।
पित्तेन पित्तमिति तं प्रवदन्ति धीराः
सान्द्रं सपाण्डु रतिजं सघनं कफेन ॥

इति रक्तपित्तलक्षणम्

क्षीणमांसं कृशं वृद्धं बालं वा ज्वरपीडितम् ।
शोषमूर्च्छाभ्रमापन्नमतिरेचनमाचरेत् ॥

निष्पीड्य वा सरसमाददीत चोद्रेण वा खण्डयुतञ्च पानम् ।
नासास्यकर्ण नयनप्रवृत्तं रक्तन्तु शीघ्रं शमतां प्रयाति ॥
श्यामाकषायोत्पलमृत्प्रियङ्गु रोध्राञ्जनाम्भोरुहकेशराणि ।
पीत्वा समध्वा समिता प्रयोज्या पित्ताश्रयश्चैव मृदोगमाशु ।
प्रविद्यमानं पिचु वासकेन कथं नरः सीदति रक्तपित्ते ।
क्षये च कासे श्वसनेऽपि यक्ष्मे वैद्याः कथं नातुरमाद्रन्ति ॥

भैषज्येन भिषग्भिस्तु कृता पूर्वं क्रिया यदि ।
क्रियायत्ते रक्तपित्ते क्षये कासे च सिद्धिदा ॥
आसायां विद्यमानाया माशायां जीवितस्य च ।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥

तालीशपत्र वृषनागरकं विचूर्ण्य
पेयं पुनः समधु सम्यगथो विविच्य ।
हन्ति भ्रमं श्वसनकासवतां रुजञ्च
भङ्गस्वरे त्वरितमाशु सुखं दधाति ॥

अटरूषकमृद्वीका पथ्याक्काथः सशर्करः।
चौद्राढ्यः श्वसनक्ले शरक्तपित्तनिवारणः॥

छागं पयो वा सुरभीपयो वा चतुर्गुणश्चापि जलेन कल्कः।
सशर्करं पानमिदं प्रशस्तं सरक्तपित्तं विनिहन्ति चाशु॥

बलाश्वदंष्ट्रामलकीफलानि द्राक्षामधूकं मधुयष्टिकानाम्।
सिद्धं पयः पानमिदं हितं स्यात् पित्ते सरक्ते मनुजस्य शान्त्यै॥

खदिरस्य प्रियङ्गूनां कोविदारस्य शाल्मलेः।
पुष्पचूर्णन्तु मधुना लिह्यादारोग्यमश्नुते।

आटकरूषकरसेन सप्तधा भाविता च पुनरेव शोषिता।
पिप्पली मधुसमन्विताभया रक्तपित्तमतिदुर्जयं जयेत्॥

एलापलानि सपद्मकनागकेशरं
द्राक्षाघनामधुकपिप्पलिका समांशा।
एषां समांशसितशर्करयुक्तलेहः
खर्जूरिका समभिहन्ति च रक्तपित्तम्॥

दाहज्वरार्त्तिश्वसनञ्च विमोहतृष्णां
मूर्च्छां निहन्ति रुधिरञ्च वमिं तथैव।
घ्राणे प्रवृत्तं रुधिरं यदि स्यात्
तदा घृतेनामलकात् फलानि॥

तोयेन पिष्ट्वा शिरसि प्रलेपः सरक्तपित्तं सहसा रुणद्धि।
द्राक्षारसं वा घृतशर्कराढ्यं जलं सिताढ्यञ्च सरक्तपित्ते॥

शावन्नचैवेक्षुरसं सिताढ्यं क्षयञ्च कासं क्षतजं निहन्ति।
नस्यं विदध्यात् हरितालिकाया रसेन वालक्तरसेन वापि॥

स्याद्दाड़िमस्य प्रसवोद्भवेन रसेन नस्यं रुधिरस्रुतेऽपि।
आम्रास्थिजम्बूद्भवशर्कराढ्यं नस्यं सिताढ्यं हितकृत् ज्वराणाम्
नासाप्रवृत्तं रुधिरं निहन्ति हिक्कासकृच्छर्दिश्वमनं रुणद्धि॥

पलाण्डुपत्रनिर्य्यासनस्यं नासास्रजापहम्।

यष्टीमधुमधुयुतं नस्यं पश्चात् नस्येऽसृजं जयेत् ॥
वासापत्ररसं विधाय मतिमान् योज्यानि चैमानि तु
रोध्रश्चोत्पलमृद्विका समधुकं कुष्ठं प्रियङ्ग्वान्वितम् ।
चूर्णं पुष्परसेन पाचकमिदं पित्ताश्रयाणां हितम्
कासश्वाससपाण्डुकामलगदक्षै शोफमर्दी भवेत् ॥
रसो हितो दाड़िमपुष्पकस्य तथैव किञ्जल्करसोत्पलस्य ।
लाक्षारसो वा पयसा च नस्यं घ्राणप्रवृत्तं रुधिरं रुणद्धि ॥

इति नासाप्रवृत्तरुधिरचिकित्सा

यदि वदनपथेऽसृक् वर्त्तते तस्य कुर्यात्
प्रतिविधिविहितः स्याद् वच्यते मानुषस्य ।
भवति न सुखसाध्यं लोहितं मानुषेषु
वदनयुवतियोन्यां रक्तवाहस्त्वसाध्यः ॥
मधु मधुकमुशीरं कर्ज्जकिञ्जल्कदूर्वा-
रसमिह परिपीतं दाड़िमस्य प्रसूनम् ।
मलयजसितकुष्ठं पद्मकं चैव बालं
मधुमधुकसमन्लात् कोद्रवौ वालकौ द्वौ ।
समसुरभिपयसा वा भावनं तण्डुलानां
परिकल्पितसमग्र तुर्य्यभागेन योज्यम् ।
लघुतरमपि वक्त्रा धारितं सिद्धमेव
भवति वदनवृत्ते लोहिते पानमस्य ॥
श्रुतिपथमपि रक्तं वा प्रवृत्ते तु नासं
विहितमपि तदा स्यात् पूरणं कर्णनासे ।
रुधिरमपि रुणद्धि श्वासमाशु क्षतं वा
श्वसितरुधिरकर्द्दिमेहमुन्मादरोगम् ॥
नासाप्रवृत्ते नस्यं स्यात् मुखे पानं विधेयकम् ।
कर्णे नेत्रे पूरणञ्च गुदमार्गे निरूहणम् ॥

दाडिमस्य फलत्वग्वा चूर्णं लिह्यात् सितायुतम् ।
पद्मकिञ्जल्कचूर्णं वा लिह्याद्वा सितया पुनः ॥
मुखप्रवृत्तरुधिरं रुणद्ध्याशु वमिं क्लमम् ।
श्वासशोषौ भ्रमं तृष्णां नाशयत्याशु निश्चयम् ॥
जम्ब्वाम्रपल्लवानि, स्युर्हरीतक्या युतानि च ।
मधुशर्करया युक्तमास्यलोहितवारणम् ॥
वटप्रवालार्जुनवृक्षकाणां जम्ब्वाम्रकाणां खदिरस्य वापि ।
यथा प्रपन्नो मधुनावलेह आस्यास्रज वारयते क्षणेन ॥

इति मुखप्रवृत्तरुधिरचिकित्सा ।

काकोली मधुकं बला शतमूली दाडीमकाः सम्मिताः
मेदः क्षीरविदारिका च फलिनी स्यात्तिन्तिड़ीकं बला ।
सिद्धं गोपयसाज्यकं हितमिदं पाने तथा वस्तिषु
योनौ मेढ्रे गुदप्रवृत्तरुधिरं हन्यात् सकासक्षयम् ॥

इति शतावरीघृतम् ।

मृद्वीका मधुकं विदारि वसुधा नीली समङ्गाकणाः
काकोल्यौ बृहतीयुगं वृषमहामेदा सितं चन्दनम् ।
जातीपत्रपटोलजीरकमथो श्यामामृताः साभया
मेदे द्वे भृगुचन्दनं मधुरसाः श्यामाः समांशास्त्वमी ॥
पक्वा गोपयसा ददाति रुजिनां चास्ये चतुर्थांशकम्
मत्स्यण्डी मधुकञ्च सिद्धमिति चेत् पानं प्रशस्तं नृणाम् ।
स्त्रीणां चापि हितं निहन्ति रुधिरं पित्तात् गुदे वा भगे
मेढ्रे चापि च रोमकूपकपथे वृत्तं निहन्यात् स्रजम् ॥
एतद्द्राक्षाभिधानं घृतमपि विहितं रक्तपित्ते ज्वरे वा
वातासृग् योनिशूले भ्रममदशिरसोन्मादरक्तप्रमेहे ।
पित्तार्शे चापि कुष्ठे क्षतभवरुधिरं राजयक्ष्मेऽथ पाण्डौ

पाने वस्तौ च नस्ये हितमपि मनुजां भाषितं चात्रिणा मे

इति द्राचादिघृतम्

छल्लीं निष्कृष्य कूष्माण्डखण्डानि प्रतिकल्पयेत्।
काञ्जिकेन सुधौतानि पुनरेव जलेन तु॥
पश्चात् चीररसप्रस्थे कल्कयेत् पुनरेव च।
घृतेन पुनरेवैतत् पाचयेत् सुविधानतः॥
यदा मधुनिभानि स्युस्तदा शर्करया युतम्।
निधाय तत्र चेमानि भेषजानि प्रकल्पयेत्॥
पिप्पलीशृङ्गवेराभ्यां द्वे पले मरिचानि च।
जीरके द्वे तथा धात्री त्वगेलापत्रकं तथा॥
पलार्द्धेन वियुञ्जीयात् चूर्णं तत्र विनिक्षिपेत्।
दार्व्या विघट्टयेत्तावद् लेह्यीभूतं यदा भवेत्॥
तदा मधुघृतेनापि लिह्याद् ज्ञात्वा बलाबलम्।
रक्तपित्तं क्षयं कामं कामलं नैशिकं भ्रमम्॥
छर्दितृष्णाज्वरश्वास-पाण्डुरोगान् क्षतक्षयम्।
अपस्मारं शिरोऽर्त्तिञ्च योनिशूलञ्च दारुणम्॥
चिरं योनौ रक्तवाहं मन्दज्वरनिपीड़नम्।
वृद्धोऽपि च युवा कामी वन्ध्या भवति पुत्रिणी॥
निर्वीर्य्या वीर्य्यमाप्नोति भवेत् स्त्रीणां प्रियो नरः।
एष कुष्माण्डको लेहः सर्वरोगनिवारणः॥

इति कुष्माण्डकावलेहः।

सुस्निग्धकूष्माण्डकखण्डकानि पलानि पञ्चाशदथो सितायाः
युञ्ज्यात् सतोयं प्रणिधाय धीमान् घृतेन प्रस्थं परिपीतमेव॥
विज्ञाय पक्कं पुनरेव तत्र वासाकषायाढ़कमेव मिश्रयेत्।
दार्वीप्रलेपं विपचेच्च यावत् ज्ञात्वा तु चेमानि पुनर्वियुञ्ज्यात्
धात्रीघनाभार्गी सुगन्धजातं युञ्ज्यात् समस्तानि च कर्षमात्रं

पुनर्नवा नागरधान्यकानि पलस्य चैषां कथितानुमात्रा ॥

श्यामापलाष्टकमिदं विदधीत चूर्णं
सङ्घट्टयेत् सकलमेव पुनस्तु दार्व्या।
युञ्ज्यात् समं मधुयुतं सकलामयघ्नं
कासं ज्वरं चतजमाशु निहन्ति हिक्काम् ॥
हृद्रोगपित्तरुधिरं चयपीनसञ्च
पित्ताम्लकं विजयते श्वसनञ्च मूर्च्छाम्।
स्त्रीणां हितं भवति बालकवृद्धकेषु
श्रेष्ठं समस्तं रुजनाश बलप्रदञ्च ॥

इति कूष्माण्डावलेहः।

शतावरी मुण्डितिकामृता च फलत्वचं पुष्करमूलभार्गी।
वृषा बृहत्या खदिरञ्च मोशली पृथक् पृथक् पञ्चपलैकमात्रा ॥
पक्कं समुत्ताप्य जलं समांशं यावद्भवेच्छेषमथैव पूतम्।
विमूर्च्छितं तत्र निधाय धीमान् पलं तथा द्वादश माक्षिकस्य ॥
तथाशु चूर्णस्य च लोहकस्य विघट्टितं खण्डघृतेन तुल्यम्।
देय पलं षोडशकं विधिज्ञो विपाचयेल्लोहमये च पात्रे ॥
गुडेन तुल्योऽपि विभाति यावत् तुगाविडङ्गं मगधा च शुण्ठी।
द्वे जीरके चैव फलत्रयाणां भृङ्गं सधान्यं मरिचं सकेशरम् ॥
पलेन मात्रां विदधीत सर्वं सुघट्टितं चूर्णमिदं घृतस्य।
स्निग्धे कटाहे प्रणिधाय युञ्ज्यात् कर्षप्रमाणं विदधीत चूर्णम् ॥
प्रभातकालेषु च तस्य पानं गुरूणि चान्नानि च वातलानि।
भगन्दरार्शः श्वयथून् निहन्ति रक्ताम्लकं वा श्वसनञ्च यक्ष्मा ॥
विशोषणं कुष्ठरुजाञ्च गुल्मान् बलप्रदं हृद्यतमं प्रदिष्टम्।
सरक्तपित्तं सहसा निहन्ति योनिप्रवाहञ्च सरक्तशूलम् ॥
रक्तातिसारं रुधिरप्रमेहं समद्रवस्तो निहितं नराणाम्।

सौभाग्यदं कान्तिकरं प्रदिष्टं तेजोजसं पुष्टिबलं तनोति ॥

इति खण्डकाद्यं रसायनम्

रक्तातिसारेषु च योजनीयं रक्तप्रवाहे सरुजे सदाहे ।
फलत्रिकं तत् सविषा समङ्गा सपर्पटं दाडिमधातकीनाम् ॥
चूर्णं सिताक्षौद्रयुता प्रयुञ्ज्यात् तथैव दध्ना सघृतञ्च लेहम् ।
रक्तातिसारं रुधिरप्रवाहं योनिप्रवाहं सततं स्त्रियाश्च ॥
निवारयत्याशु हितं नराणां वालेऽतिसारे प्रशमाय योग्यम् ।

इति रक्तातिसारचिकित्सा

योनिप्रवाहे मधुकं समङ्गा पलाटलं किम्बटलानि पथ्या ।
मुस्ता विशाला कटुरोहिणी च क्वाथो हितः शर्करया युतोऽयम् ।
योनिप्रवाहं विनिवारयेच्च रक्तयोनिशूलं सरुजं तथार्त्तिम् ।
एला समङ्गा सह शाल्मलीना धातकी सौगन्धिका सलोध्रा ।
क्वाथो हितः शर्करया सलज्जः योनिप्रवाहं विनिवारयेच्च ॥

इति योनिप्रवाहचिकित्सा

वर्मातपाग्नि च दिवाह्नि चाम्लं सौवीरकं वा कटुकं कषायम् ।
क्षारं सुरा वा परिवर्जनीयः रक्तपित्ते मनुजे हिताय ॥
वास्तूकचिल्ली सुनिषण्णकञ्च जीवन्तिका वा शतपुष्पिका वा ।
शाका हिता रक्तगदे च पित्ते मुद्गास्तथा लोहितशालयश्च ।

यवगोधूमचणकाः कोशातक्याः पटोलकम् ।
मुद्गा माषा हिताश्चैव रक्तपित्तनिवारणे ॥

हरिणशशकलावास्तित्तिरास्ते कलिङ्गाः
कुक्कुटमपि मयूराः क्रौञ्चपारावतानाम् ।
पललमनिलपित्ते वह्निना वै हितञ्चेत्
भवति बलसमीपं सत्वतेजश्च कान्तिः ।

इति श्रीमहर्षिविरचिते हारीतोत्तरे तृतीयस्थाने रक्तपित्तचिकित्सा नाम एकादशोऽध्यायः ।

द्वादशोऽध्यायः ।

अथातो वक्ष्यते पुत्र ! अर्शोरोगचिकित्सितम् ।
षट्प्रकारेण ये प्रोक्तास्तेषाञ्च शृणु लक्षणम् ॥
वातदोषैस्त्रिभिरपि वातपित्तकफादिकैः ।
सान्निपातश्चतुर्थः स्यात् पञ्चमो रक्तसम्भवः ॥
षष्ठकः सहजो ज्ञेयश्चार्शसां षड्विधोद्भवः ।
एवञ्च षट्प्रकारेण जायन्ते गुदजा रुजः ॥

अनशनलघुरूक्षाहारसंसेवनेन
कटुलवणविदाहीसेवया वेगरोधात् ।
भवति सतत सौम्या विष्टरेणैव हीनः
कुपितमरुतवेगादर्शसां भूतिरासीत् ॥
अलघुभोजननिष्टस्य मलमूत्रविधारणे
अतिसंक्रमणेनापि गुदजः सम्प्रकुप्यति ।
लवणकटुकषायातिक्तसंसेवनेन
अनिलमधुरमाज्यात् शीतलेनातिरोधात् ।
कुपितमनिलनासाधारमासवपाने
वितरति रुधिरं वा पायुमार्गे मरुतस्तु ।

कटुकाम्ललवणोष्णानि विदाहीनि गुरूणि च ।
सेवनान्निरतश्चैव श्रमाद् व्यायामपीडया ।
यानव्यायामदोषाद्वा दुर्नामा पित्तसम्भवः ॥

अव्यायामात् तस्य शीलादजस्रं शीताहारान्याह्नातिसंसेवनाच्च ।
शैत्यात्यस्मात् तत्समीप्याच्छलेन दुर्नामा सञ्जायते श्लेष्मरोगात् ॥
शीतत्वतोदं परुषं विनिद्रा गुल्मोदराष्ठीलविसूचिका वा ।
शोथस्तथा कृष्णनखास्यनेत्रं लिङ्गानि वातप्रभवार्शसानाम् ॥

दाहभ्रमौ ज्वरपिपासिशरीरता वा
मूर्च्छार्तिः पीतनखदन्तमुखानि यस्य ।

पीतच्छविर्भवति वा विड्भेदनञ्च
पित्तेन जातगुदजस्य च लक्षणानि ॥
निद्रा च जाड्यघनमन्दरुजा च शोफाः
शूलातिगुल्मगुदभङ्गुरकास्तथा स्युः ।
विड्बन्धतोदमरुचिर्गतिमन्दता च
श्लेष्मोद्भवा गुदरुजः खलु भेषजञ्च ! ॥
शूलानाहारुचिः कासो हृल्लासो रतितोदना ।
स्कन्धयोर्जाड्यता सर्वास्त्वार्शसः सम्भवन्ति हि ॥

इति अर्शोलक्षणम्

गुदजं लक्षणं वच्ये गुदे कण्डुरसृक्स्रवः ।
परुषा विषमा दीर्घा वातेन गुदजा मताः ॥
सदाहाश्च विचित्राश्च पीता नीलावभासिकाः ।
लोहितं स्रवते शोणं पित्तेन गुदजा मताः ॥
सदाहाः कठिना ये तु विपाको विड्विबन्धता ।
शीतकण्डूसमस्थूला कफेन गुदजा मताः ॥
सदाहाः सरुजाः श्यावाः कण्डुः शोषश्च जायते ।
स्रवते सततं रक्तं ते कण्ड्वासृग्भवार्शसः ॥
धान्याङ्कुरसमाकाराः क्रिमयः सम्भवन्ति हि ।
वातवर्चःसमौ लिङ्गौ गुदजा सम्भवन्ति हि ॥
वक्रास्तीक्ष्णाः स्फुटितवदना दीर्घविम्बीफलाभाः
केचित् सिद्धार्थकफलनिभाः कालखर्जूरकाभाः ।
कर्कन्ध्वाभाः कुसुमसदृशाः केचिदम्भोजवीजा
वायोः पाने विहितमनसां सम्भवश्चार्शसाञ्च ॥
गुदे नासाकर्णरन्ध्रे मुखे वा तथा वर्त्तते नेत्रयोर्योनिमध्ये ।
नराणां शरीरे भवन्त्येव रोगा न साध्याः सुखेन क्रियायत्नतः स्युः
त्रिवलीगुदमध्ये तु वाह्यतोऽभ्यन्तरेषु च ।

अर्शमान्तु विजानीयात् त्रीणि स्थानानि चैव हि ॥
वाह्यतः सुखसाध्यः स्यात् मध्ये कष्टेन सिध्यति।
असाध्योऽन्तर्वलीजातो गुदजो भिषजां वर !॥
प्रलेपवर्त्तिभिः स्वेदैर्वाह्याः सिध्यन्ति चोत्तमाः।
यन्त्रशस्त्रेण साध्यास्तु अन्तर्जाश्चान्तरौषधैः॥
तस्मात् पुत्र ! प्रयत्नेन क्रिया कार्य्या विजानता।
येनातुरस्य रक्षा स्याद् येन रोगो निवर्त्तते॥
करचरणमुखे वा नाभिमेढ्रे गुदे वा
भवति हि यदि पुंसां शोफशोषो ज्वरश्च।
श्वसनतमककर्द्दिर्मोहहृत्पार्श्वशूलं
कृशमरुचिविबन्धश्चातिसारोपसर्गाः॥
इत्येवं द्वादशार्शःसु सम्भवन्ति ह्युपद्रवाः।
उपद्रवैर्विना साध्या न साध्या बहूपद्रवाः॥

इति अर्शोपद्रवाः।

शूलारोचकतृष्णार्त्तश्चातिरक्तप्रवाहवान्।
शूलशोफातिसारार्त्तो ध्रुवं न जीवतेऽर्शसः॥

इति अर्शोलक्षणानि।

अतोऽर्शसां प्रवक्ष्यामि क्रियाश्चैव भिषग्वर !।
वटक्षारशस्त्राणि येन सम्पद्यते सुखम्॥
अर्शसाञ्च क्रियाः प्रोक्ताश्चार्शोघ्ना बलवर्द्धनाः।
पित्तशोणितशमना न च वातप्रकोपनाः॥
तस्यादौ पाचनं श्रेष्ठं ततो भेषजमाहरेत्।
पथ्यामृता च धनिका पाने क्वाथो गुडान्वितः॥

इति पाचनक्वाथः।

दन्ती विड़ङ्गं मगधा च धान्यं भल्लातगोड़ं तिलकुष्ठयुक्तम्।

संमिश्र सम्यक् पयसातिकल्को निहन्ति पाने गुदजांश्च रोगान्

इति कल्कयोग.।

नागरपिप्पलीचव्यविडङ्ग दन्ती च शठ्यभया त्रिवृता च।
कल्कमिदं सगुडं प्रतिपाने चार्शसि नाशनकारि नराणाम्॥
पत्रकर्कशरशुण्ठीसमैलातुम्बुरुधान्यविडङ्गतिलानाम्।
क्वाथो हरीतकीसपिगुडेन पीतो निहन्ति गुदे गुदजानि॥
पिप्पलिकामभयागुडयुक्तां प्रातर्भवे नरो भक्षति चैताम्।
तस्य गुदकीलकमाशु हन्ति सकामलपाण्डुजरोगवर्गान्।
सुखिन्नवार्त्ताकुफलस्य तोयं दध्ना सिताह्वासलिलस्रुतेन॥
पाने विधेयं गुदकीलकाना
क्रिमीन् निहन्यात् क्रिमिजांश्च रोगान्।
भल्लातकाः कृष्णतिलाश्च पथ्या चूर्णं गुडेनापि नरस्य सेव्यम्।
हन्याच्च पाने गुदकीलमेहशूलाशकासान् विनिहन्ति तस्य॥

इति भल्लातकचतुष्टयम्।

शूरणकन्दकमर्कदलैस्तु वेष्टितमेव हि कर्दमलिप्तम्।
पक्वमनल्पवर्णकसमानं तत् पयः सैन्धवतैलविमिश्रम्॥
भक्षति चार्शविनाशनहेतोर्वातविकारहितोऽपि नरस्य।
चित्रकपुष्करमूलशठीनां तेषु समांशास्तिला विनियोज्याः॥
शूरणकन्दकखण्डसमेतं तेषु समोऽग्निकफलानि दद्यात्।
सैन्धवं तस्य चतुर्गुणकश्च भावितमर्कदलेन समस्तम्॥
तच्च घृतस्य घटे विनिधाय अरण्यगोमयवह्निविपक्वम्।
चौरमिदं लवणघृतपक्वं तक्रयुतं प्रतिपानमतोऽपि॥
नाशयति गुदकीलककीलान् निहन्ति विसूचिभगन्दरानपि
कामलपाण्डुनाहविबन्धान् गुल्ममरोचकनाशनकारी।
मूत्रगदगलकगण्डक्रिमीणां नाशनभद्रकसैन्धवो नाम॥

इति कल्याणनाम लवणम्।

त्रिकटुकमगधानां मूलचित्रं त्रिगन्धं
समतुलितमरीचं तुल्यभल्लातकानि।
सकलमिह समस्तादेकतः सम्प्रचूर्ण्य
द्विगुणतुलितमात्रं योजनीयो गुड़स्तु॥
सकलमपि विकुत्य स्निग्धभाण्डे निधाय
प्रतिदिनमपि सेव्यं चाक्षमात्रं सुधीरैः।
गुदजजठररोगं शूलगुल्मान् क्रिमींस्तु
जनयति जठराग्निं हन्ति पाण्डुक्षयं वा।

इति भल्लातकवटकः।

नागरं त्रिफला चैव पलां स्त्रींश्च प्रयोजयेत्।
चतुःपलं मरीचानां पिप्पलीनां पलद्वयम्॥
पलमेकं तु चव्यस्य योज्यं तत्र भिषग्वरैः।
तालीशार्द्धं पलं देयं पलार्द्धं पद्मकस्य च।
जीरकाभ्र समं मात्रा समेन तुलितो गुडः॥
सुपक्वा सुघना श्यामा पिप्पलीनां शतत्रयम्।
उदूखले खोटयित्वा स्निग्धभाण्डे निधापयेत्॥
अक्षप्रमाणा गुडिका नराणां प्रातः प्रदेया सकलामयघ्नी।
निहन्ति चार्शांसि च पाण्डुरोगं हलीमकं कामलकं भ्रमं वा॥
गुल्मातिसारञ्च सरक्तपित्तं क्षयं क्षतं चाक्षयमस्य यक्ष्मा।
जीर्णज्वरारोचकपीनसानां हितो भवेत् प्राणदमोदकोऽयम्॥

इति प्राणदमोदकः।

जाजीपिप्पलीमूलकोलमगधापथ्याग्निकं नागरं
सूक्ष्मैला च पलद्वयेऽपि क्रमशः कृत्वा पलैः सैन्धवम्।
भल्लातकफलानि पञ्चशतकं दत्त्वा समस्तेन तु
द्वैगुण्योऽपि पुराणसूरणहतः सर्वस्य तुल्यो गुड़ः॥
चोदित्वा वटकाक्षमात्रमुपभुग् जातो विशेषो गुणः

कुर्य्यादर्शनिवारणं क्षयमपि श्रेष्ठं तथा सुप्रभम् ।
मन्दाग्निर्वड़वासमो भ्रमहरो हृद्रोगपाण्डामय-
श्वासानाहभगन्दरामयहरोदावर्त्तनिर्वासनः ॥
ख्यातोऽप्यर्शे विकारोऽपि ऋषिणा योगयुक्तिना ।
काङ्कायनेन मतिमन् ! तेन सौख्यमभीप्सति ॥

इति काङ्कायनगुडिका ।

लवणोत्तम वह्निकलिङ्गयवं चिरविल्वमहत् पिचुमर्दयुतम् ।
पिब सप्तदिनं दधिमस्तुयुतं यदि मर्दितुमिच्छसि पायुरुजम् ॥

इति लवणोत्तमाद्यं चूर्णम् ।

विश्वोपकुल्यामरिचानि केशरं पत्रं लवङ्गैलकजातिकोषकाः ।
चूर्णं हितं शर्करयुक्तमेतत् गुदामयानामुदरार्त्तिशान्तये ॥

इति एलादिगुडिका ।

सनागरं पुष्करवृद्धदारकं गुड़ेन कुर्य्यादिह मोददारकम् ।
अर्शःसु दुर्नामकरोगदारकं करोति वृद्धं सहसैव दारकम् ॥

इति चतुर्भिर्मोदकः ।

त्रिकटुकमभयानां पुष्करं चित्रकाणां
क्रिमिरिपुतिलचूर्णं कारयेत् वा गुड़ेन ।
उषसि वटकमेकं भक्षयेद् यो मनुष्यो
विनिहितगुदरोगश्चाग्निवृद्धिं करोति ॥

इति त्रिकटुकाद्यो मोदकः ।

मरिचं नागरं चित्रं सूरभागोत्तरेण संकुट्य ।
सर्वसमो गुड़युक्तो मोदको विल्वप्रमाणं सेवेत् ॥
विनिहितसकलगुदामयो जठरगुल्मान् निहन्ति ।
शूलानि क्षपयति मनुजानां करोति तनुपुष्टिम् ॥

इति मरिचाद्यो मोदकः ।

विषमगतशूरणकन्दो लोहितवर्णेन यो भवेन्मतिमान् ।

षट्खण्डीकृतमपि संशुष्कान् षोड़शान् भागान् ॥
तस्यार्द्धेन तुलितश्चित्रकशुण्ठी च तत्र संयोज्या।
मरिचस्य चैकभागो गुड़ेन बद्धस्तु मोदको मनुजैः ॥
भक्षित एव हि गुणवान् निहन्ति सकलान् गुदामयान्।
त्वरितमग्निदीपनमुक्तं गुल्मानां जठरजाम्।
हन्ति शूरणभागौ चित्रकशुण्ठी मगधमरिचभागौ ॥

इति शूरणपिण्डः।

त्रिफलमगधजानां मूलतालीशपत्रं
क्रिमिरिपुमगधानां पुष्करं चेत् समांशः।
मरिचदहनभागश्चैकभागेन शुण्ठी
सकलतुलिततुल्यः शूरणस्यैकभागः॥
मदनचपलयुक्तं वृद्धदारेभृङ्ग
कृतमिह परिचूर्णं द्विगुणो जीर्णखण्डः।
कृतवटकमुखस्तु प्राशते यो मनुष्यो
हरति जठररोगं तस्य चाशु प्रकोपम् ॥
गुदजरुधिरपित्तं कासमन्दाग्निशूलान्
क्षयतमकहलीमान् कामलांश्च क्रिमींश्च।
विदधति बलपुष्टिं दापयेच्चाशु मार्गं
प्रबलयति हुताशं योगराजप्रसिद्धः॥
योगराजेन युञ्जीत स्वयमेवाप्यगस्तिना।
अस्य योगस्य योगेन भीमोऽपि बहुभक्षकः॥

इति भीमवटको नाम।

चव्यं पाठा त्रिकटु मगधा मूलकस्तुम्बुरूणां
विल्वाजाजीरजनिसुरसापथ्यया सैन्धवञ्च।
पिष्ट्वा चैतत् समगविधृतं पाचयेत् सुप्रयुक्तं

पानाभ्यङ्गे हरति गुदजान् वातरोगाश्मरीश्च ।

इति चव्याद्यं घृतम्

श्यामा कुष्ठं मधुकमदनं पुष्पकं चित्रकञ्च
विल्वं दारु प्रतिविषशताह्वाकलिङ्गाशठीनाम् ।
पिष्ट्वा तैलं द्विगुणपयसा पाचितं चातुवासे
चाभ्यङ्गे वा हितमपि गुदव्याधिनिर्नाशहेतोः ॥
वातव्याधिश्रवणरुधिरे कर्णशूलेऽश्मरीणां
जङ्घापृष्ठे कटिशिरसि शिरावङ्क्षणे वाततोदे ।
विष्टाबन्धश्वसनक अतीसारके मूढगर्भे
श्रेष्ठं तैलं सकलनिचयव्याधिसन्धारणेन ॥

इति पिप्पल्याद्यं तैलम्

मुस्ता विश्वविडङ्गचव्यकशठी पथ्या च तेजोवती
दन्तीन्द्राचित्रकता समांशकपली माता च प्रत्येकशः ।
तस्माच्चाष्टपलान् पुरुष्करमथो षट्त्रुद्दारोपलान्
युञ्ज्यात् षोड़शशूरणाख्यसलिलद्रोणेऽखिलं कल्कितम् ।
तेनैतद्विपचेत् गुड़ांत्रिगुणितं युञ्ज्याद् भवेद्वा दिनम्
उद्धृत्यैव पुनश्च चित्रकत्रिवृत्तेजोवती शूरणम् ।
एलापत्रकनागकेशरलवङ्गाना समं चूर्णितम्
एषां षोडशभागयोग्यविहितं सर्वञ्च तं चैकतः ॥
स्थाप्यं स्निग्धघटे प्रभातसमये भक्षेदक्षमात्रं वटं
जीर्णे चौरमपि प्रभूतमतिमान् पाने तथा भोजने ।
अर्शोगुल्मभगन्दरांश्च ग्रहणीं पाण्डुं गदं कामलां
शूलञ्चाथ विबन्धकान् क्षतजरुग् यक्ष्मागकं हन्ति च ।

इति भीमसेनो नाम वटकः

भल्लातकानां द्विसहस्रकाणां द्रोणे जले साध्य पदावशेषम् ।
क्वाथं तु तस्मिन् विपचेद् गुड़स्य तुलाप्रमाणं पुनरेव तत्र ॥

तत्रैव संयोज्य पलत्रिकं वा व्योषं यवानीघनसैन्धवानाम्।
एलान्लवङ्गं दलनागकेशरं प्रत्येककर्षं तुलितं नियोज्यम्॥
संकृत्य तैले घृतभाजने वा स्थाप्यं प्रभाते वटकप्रमाणम्।
भक्षेद्गुड़ं वै विनिहन्ति रोगान् भगन्दरार्शःक्रिमियक्ष्मपाण्डून्॥
गुल्माश्मरीमेहहलीमकं वा सास्रक्पित्तं ग्रहणीं निहन्ति।
करोति पुष्टिं बलमातनोति वर्णप्रकर्षं सुखमादधाति॥

इति भल्लातकानां शतपञ्चकानि।

दशमूलगुड़चिशठीत्तुरकं सहचित्रकभार्गीफलासहितम्।
प्रदिशेत् शतपञ्चकं वाग्निमुखे विपचेज्जलद्रोणमितेन तच्च॥
गुड़जीर्णशतं प्रददेत् क्वथितमवताय्य सुशीतलमेव समम्।
दलकेशरभृङ्गलवङ्गयुतं कृतचूर्णमिदं सकलैकमिति॥
घृतभावितमेकदिनं विदधीत घृतभाजनके दिनसप्तमिदम्।
स्निग्धघटे च विदधीत मनुष्यः दत्तमिदञ्च गुदजामयसङ्घे॥
मोदकमेकमुषःसु ग्रसेत् तथा विनिहन्ति गुदामयमेहरुजः।
हन्ति कासहलीमककामलकं हितमेव हुताशनदीप्तिकरम्॥

इति भल्लातकगुडः।

तरुणे च जले क्षिप्तो जलेनैव विलीयते।
लोहितो लोहितायाति पलमेकं गुड़स्य च॥
ग्रन्थिकं चित्रकं मुस्तं चविकं त्रिफलामृता।
सहदेवी गजकर्णापामार्गश्च कुठेरकम्॥
चतुःपलञ्च प्रत्येकं कल्के द्रोणाम्भसा सुधीः।
द्वे सहस्रे समे पिष्टे भल्लातक्याः फलानि तु॥
पादावशेषे कल्के च लोहचूर्णं तुलार्द्धकम्।
सर्पिर्द्विकुड़वं क्षिप्ता सर्वं चैकत्र घट्टयेत्॥
फलत्रिकं तथा व्योषं चित्रकं लवणाष्टकम्।
विडङ्गानि समांशानि सर्वाणि पलमात्रया॥

चतुःपलं वृद्धदारोर्मुर्वाख्या तु चतुःपला ।
संशुष्कशूरणं कन्दं चूर्णं चाष्टपलोन्मितम् ॥
संक्षिप्य खादयेच्चूर्णमवताप्य सुशीतले ।
स्थापितं मधुसंयोज्य कुडवद्वयमात्रया ॥
देयं गुदामये चादौ कल्कसप्रातराशने ।
अर्शांसि ग्रहणीरोगं कामलाञ्च हलीमकम् ॥
गुल्मक्रिमीनश्मरीञ्च मन्दाग्निमसृग्गलितम् ।
नाशयत्याशु यत्स्माशं करोति बलमाकृतेः ॥
आशु वृद्धिं प्रकुरुते वलीपलितनाशनम् ।
रसायनस्य योगेन नरो नागबलो भवेत् ॥

इति भल्लातकावलेहः

रक्तार्शसामुपचारं वक्ष्यामि शृणु पुत्रक ।
प्रातस्तिलान् भक्षयेच्च नवनीतविमिश्रितान् ।
सितानागरसंयुक्तं नवनीतं सशर्करम् ।
केशरं मातुलुङ्गस्य विडङ्गशर्करायुतम् ॥
भक्षेत् कूष्माण्डकालिङ्गं नवनीतेन शर्कराम् ।
एतेन रक्तगुदजान् शमयन्ति विचक्षणाः ॥
समङ्गा शाल्मलीपुष्पं चन्दनं ककुभत्वचम् ।
नीलोत्पलमजाक्षीरं पिष्ट्वा पानमसृक्स्रुदाम ।
कुटजमूलमकेशरमुत्पलं खदिरधातकिमूलशृतं पयः ।
पिबति सप्तगुणयोगमसृग्भवं गुदजविकारनाशनकारि ॥

इति रक्तार्शश्चिकित्सा

कुक्कुटस्य पुरीषञ्च तथा पारावतस्य च ।
गृहधूमं च सिद्धार्थं धुस्तूरकदलानि च ।
काञ्जिकेन च संपिष्य वर्त्तिं सञ्चालयेद् गुदे ॥
शूरणकन्दकवर्त्तिविधेया भल्लातरसेन घृतेन च लिप्ता ।

गुदरोगं गुदकीलकमाशु नाशयति गुदजांश्च क्रिमींश्च ॥

हरिद्रा मार्कवं कुष्ठं गृहधूमं सुवर्च्चलम्।
सिद्धार्थकरसञ्चैव काञ्जिकेन च पिष्यते ॥
मधुना सह वर्त्तिः स्याद् गुदे सञ्चालिता यदि।
अर्शसां नाशनं चैव करोति सहसा नृणाम् ॥

इति वर्त्तियोगः।

दत्त्वा वै पलसम्मितञ्च हुतभुक्व्योषं रसानां गणान्
षड्ग्रन्थापिचुमर्दवारिभकणाभार्ङ्गीशिलातालकम्।
पिष्ट्वा मूत्रगणस्य काञ्जिकयुतं दत्त्वा शिलालेपनं
दुर्नामानि हरन्ति तथैव गुदजान् सर्वातिसारामयान् ॥
यत्र शस्त्रकर्मस्य नार्हति तं तु शल्यकं।
यथा यन्त्रेण छित्वान्ते दाहस्तत्र विधेयकः ॥
चर्मकीलं तथा छित्त्वा दग्ध क्षारेण धीमता।
पक्वजम्बूसमो वर्णो क्षारदग्धे प्रशस्यते ॥
दग्धं वा गृहधूमञ्च कदलीजीवमुद्गकैः।
पलाशार्ककलिकाक्षारमपामार्गघृतान्वितम् ॥
क्षारदग्धे प्रशस्येत नवनीतघृतेन वा ॥
कुष्ठं पथ्या तथा निम्बपत्राणि च मनःशिला।
तस्मान्मधुघृतैर्मिश्रं निर्धूमाङ्गारके क्षिपेत् ॥
धूपयेद् गुदजान् तेन यथा सम्पद्यते सुखम्।
मनःशिलानागरकं सगुग्गुलं समापयम् ॥
देवदारु सपौष्करं विशालासर्जिकारसम्।
घृतेन धूपयेदेव गुदामयभगन्दरम् ॥
निहन्ति पीनसं दुष्टं व्रणं सपूयगन्धिकम्।
निर्गुण्डी पत्रनालञ्च तथा सार्षपचूर्णकं
देवाह्वं घृतशर्करामधुयुतं धूपं गुदाज्जादिकं।

दुर्नाम्नि सरुजे व्रणे च विषमे दुष्टे विसर्पेषु च
पामापीनसकासनाशनकरो धूपो ग्रहोच्छेदनः ॥
एवं क्रियाविधिः प्रोक्तश्चातः पथ्यानि मे शृणु ।
शालिषष्टिकमुद्गाश्च कुलत्थाढकवास्तुकम् ॥
चिल्ली च शतपुष्पा च कुष्माण्डकपटोलकम् ।
कारवेल्लं च तुण्डीरं शूरणो राजिकाजकम् ॥
गुडस्तक्रं घृतं चैव शस्यते चार्शसां सदा ।
शूकरः शशको गोधा मूषको वा सरीसृपाः ॥
लावतित्तिरिवार्त्ताका मांसानि क्वथितानि च ।

वल्लूरमत्स्यदधिपिच्छिलतैलविल्व-
वार्त्ताकुभोजनमतिप्रतिवर्जनीयम् ।
निद्रान्ति वा निशि दिवा शयनञ्च शीत-
शीतान्नमेव परिवर्जितमादरेण ॥

इति श्रीमदात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने अर्शश्चिकित्सा नाम
द्वादशोऽध्यायः ।

## त्रयोदशोऽध्यायः ।

### अथ कासचिकित्सा ।

आत्रेय उवाच ।

अथ वक्ष्यामि कासानां निदानं सचिकित्सितम् ।
पञ्चधाऽन्नविहाराणि शृणु पुत्र ! महामते ! ॥ १

हास्यात् प्रहास्य रजसांसि तथैव रोधात्
व्यायामधूमक्षवथुप्रतिरोधनाच्च ।
पानान्नशोषेऽप्यतिशीतकसेवनाच्च
सञ्जायतेऽपि मनुजां प्रतिधाम कासः ॥

संसेवनान्मधुरपिच्छिलजागरेण
स्वप्नैर्दिवातिदधिगौल्यगुड़ाशनेन।
संजायते मदनतैलनिषेवणेन
मद्येन वा भाविनि संजननं कफस्य॥

उदान ऊर्द्ध्वगतिवैपरीत्यात् कफेन प्राणानुगतेन दोषः।
ऋद्धं निरेत्य कफकासमकण्ठे करोति तेनापि च कामसंज्ञाम्॥

कासाश्चाष्टौ समुद्दिष्टाः क्षतजोऽन्यः प्रकीर्त्तितः।
वातिकः पैत्तिकश्चैव श्लैष्मिकः सान्निपातिकः॥
वातपित्तसमुद्भूतः श्लेष्मपित्तसमुद्भवः।
सप्तमो लोहितेनात्र चाष्टमो जायते क्षयात्॥
न वातेन विना श्वासः कासो न श्लेष्मणा विना।
न रक्तेन विना पित्तं न पित्तरहितः क्षयः॥
कथितः सम्भवः श्वासस्यातो वक्ष्यामि लक्षणम्।
येन संलक्ष्यते नृणां कासश्चाष्टविधः परः॥

क्षीणेन्द्रियः पार्श्वरुजोऽतिवेगः शूलावृतो वा गलके च सङ्गः।
निद्राकृतिर्भिन्नरवो मनुष्यो वातेन कासस्य भवेत् प्रकाशः॥

इति वातकासलक्षणम्।

कण्ठे विदाहो ज्वरशोषमूर्च्छा तृष्णा भ्रमः पित्तभवे च कासे।
आस्ये कटुत्वञ्च शिरोऽर्त्तिपित्तं निष्ठीवते पीतनखानि नेत्रे॥

इति पित्तकासलक्षणम्।

जाड्यं वमिः पाण्डुभवञ्च कासं निष्ठीवते यः सघनं कफं वा।
भक्तारुचिर्वा कफपूर्णदेहं घनः स्वरः श्लेष्मभवे च कासे॥

इति श्लेष्मभवकासलक्षणम्।

कण्डूदाहश्वासच्छर्दिशोषारोचकपीड़िताः।
शिरोऽर्त्तिशोथहृल्लासः कासे त्रिदोषसम्भवे॥
कासः कण्डूः पिपासा च कुक्षिशूलो विनिद्रता।

शुष्ककासः पिपासा च वातपित्तोद्भवः कफः ॥
धूमगन्धः पीतवर्णोऽग्निप्रपाको सरक्तकः ।
रक्तनेत्रः पिपासार्त्तः पित्तश्लेष्मान्वितः कफः ॥
व्यवायातिप्रसङ्गेन वेगरुद्धाभिघाततः ।
भारोद्वहणयानेन जायते क्षतजः कफः ॥
तेन हृदि व्यथा रूक्षं कासते च सशोणितम् ।
श्वासः सक्लीयते गात्रं दीनो मन्दज्वरातुरः ॥
वेपते पर्वभेदश्च सोरुभ्रमनिपीड़ितः ।
एवं क्षतजोनिर्दिष्टो नृणां प्राणापहारकः ॥

इति क्षतजकासलक्षणम्

अत्यायासात् क्षतात् क्षीणात् सम्पातात् लवणभोजनात्
धातुनाशात्तद्दोषेण जायते रक्तजः कफः ॥
विस्रगन्धास्य कुक्षुग्लानो वै विकलेन्द्रियः ।
रक्तनिष्ठीवनार्त्तः स्यात्तेनापि सदातुरः ॥
क्षीयते सततं गात्रं मोहस्तृष्णा च जायते ।
इत्येतैर्लक्षणैर्युक्तं रक्तकासं विनिर्दिशेत् ॥

इति रक्तकासलक्षणम्

अथ क्षयानुमानेन लक्ष्यते कासलक्षणम् ।
पाण्डुरोगे तथा यक्ष्मे गुल्मे वापि क्षतक्षये ॥
शोफार्शसां प्रतिश्याये चावश्यं काससम्भवः ।
एतेषां चानुमानेन कासं संलक्षयेद् भृशम् ॥
स्थविराणां रक्तकासः सोऽपि याप्यः प्रकीर्त्तितः ।
बालानां जायते कासो धातुवैकल्ययोगतः ॥
एते कासाः समुद्दिष्टा दशभिर्भिषगुत्तमैः ।
तेषां क्रिया प्रतीकारः पथ्यभेषजमेव च ॥

इति कासलक्षणम्

शतमूलिकाक्वथितः कषायः पीतः कणाचूर्णयुतः सुखोष्णः।
नृणां निहन्यान्मरुतोद्भवन्तु कासं सशूलञ्च विपाचनं स्यात् ॥
भार्गीशठीगोस्तनीशृङ्गवेरभृङ्गीकणाचूर्णयुतोऽवलेहः।
गुड़ेन तैलेन हितो नराणां मरुद्भवश्वासविकारनाशनः ॥

विश्वो दुःस्पर्शभृङ्गी शठी पुष्करं
दारुभार्गीकणामुस्तं रास्नायुतम्।
शर्करायुक्तमनुदिनञ्च चूर्णं
कासं निःश्वासवातोद्भवं हन्ति वै ॥

इति वातकासचिकित्सा।

कट्फलं कट्तृणं भार्गी मुस्ता वचा धान्यकम्।
पर्पटं देवदारुस्तथा दार्वी विश्वायुतकर्कटम् ॥
कल्कयित्वा पानमेतन्मधुसंयुतं च सर्वदा।
कासिनां श्लेष्मसम्भवं कासं न् प्रतिकरोति ॥
क्षयं पीनसं कण्ठग्रहं शोषवातात्मकम्।
कफं नाशयत्याशु हिक्काज्वरं श्लेष्मकम् ॥

इति कट्फलादि।

द्राक्षामलक्याः फलपिप्पलीनां कोलं सखर्जूरयुतोऽवलेहः।
रक्तपित्तकासक्षयनाशकारी सकामलं पाण्डुहलीमकञ्च ॥
बालाद्विहल्यौ मधुकं वृषञ्च तथैव कुष्ठं पिचुमन्दकञ्च।
गवास्तनीसंयुतकल्कमेतत् पानं हितं पित्तकफात्मके च ॥

मुस्ताटरूषकफलत्रिकटारुभार्गी
व्याघ्री सपुष्पफलमूलदलैरुपेता।
रास्ना विषा च मधुरसुरसादलानि
चूर्णं निहन्ति क्वथितेन जलेन कासम् ॥
वद्धाथवा च गुटिका मधुना गुड़ेन
सिन्धूद्भवेन मगधा समहौषधेन।

आस्ये धृता निशि विशालगुणा भवन्ति
श्वासं क्षयं क्षतजकासमिदं निहन्ति ॥

इति मुस्तादिचूर्णम्

शर्करा चैव खर्जूरं द्राक्षा लाजा कणा मधु ।
सर्पिर्युतो हितो लेहः पित्तकासनिवारणः ॥

इति पित्तकासचिकित्सा

आटरूषकपत्राणि पिचुमन्ददलानि च ।
तुलसीस्वरसञ्चैव शठी भृङ्गी मरीचकम् ॥
चूर्णं शुण्ठी गुडैर्युक्तं लिह्यात् कासे कफात्मके ।
भार्ग्याश्च नागपिप्पल्याः पिबेत् क्वाथं सुखोष्णकम् ॥
आर्द्रकस्य रसं नीत्वा मधुना च पिबेत् सुधीः ।
कासे श्वासे प्रतिश्याये ज्वरे श्लेष्मसमुद्भवे ॥
कट्फलं भूतृणं भार्गी शुण्ठी पर्पटकं वचा ।
सुराह्वञ्च जलश्रुतमुक्तञ्च पण्डितैस्तथा ॥
मधुना संयुतं पानं कासे वातकफात्मके ।
श्वासे हिक्काज्वरे शोषे महाकासे च दारुणे ॥

इति कफकासचिकित्सा

तालीसपत्रं मरिचञ्च विश्वा श्यामायुतं चोत्तरभागवृद्ध्या ।
त्वक् पत्रकेणापि लवङ्गमेलां पिप्पल्यकाष्टौ गणितां सिताश्च
लिह्यात् प्रभाते श्वसने च कासे प्लीहारुचौ पीनसच्छर्दिहिक्का
शोफातिसारं ग्रहणीञ्च पाण्डुं क्षयं निहन्यात् क्षतजञ्च यक्ष्म

इति लघुतालीशादि

तालीशं त्रिफलाप्रियङ्गुमगधामूलञ्च मुस्ता शठी
दार्व्येलादलनागकेशरलवङ्गानां तथा नागराः ।
कृष्णाकोलकबालकं सचविका मूर्वा विषा कर्कटं
द्राक्षा कुष्ठनिशाग्निवत्सकद्वयं गोकण्टतिक्ता तथा ॥

हृद्याम्लश्च सदाड़िमाम्लकरसं पक्का समांशं भिषक्
एतेषां समभागचूर्णविहितं योज्या समा शर्करा।
योज्यं चार्द्धपलं निहन्ति क्षतजं कासं तथा श्वासकं
पाण्डौ कामलमेदशोषगुदजे शस्तं सदा यक्ष्मिणाम्॥

इति वृहत्तालीशाद्यम्।

आमजे शूलरोगार्त्तिः पर्वभेदो भ्रमः क्लमः।
शोषः शिरोव्यथा क्लेदो नेत्रे गम्भीरमिच्छति॥
खल्ली वा चेतन वापि अजीर्णाज्जायते वमिः।
सापि स्निग्धा च रूक्षा च द्विविधा जायते वमिः॥
गम्भीरनेत्रा वमते विड्बन्धो वातिभाष्यते।
गात्रे खल्लीकरं शूलं तथा शोथातिमूर्च्छना॥
विकलाङ्गा भ्रमार्त्तश्च भ्रमन्तं पश्यते जगत्।
शिरोऽर्त्तिर्वेपतेऽत्यर्थं करपादौ हिमोपमौ॥
एतैर्लिङ्गैस्तु संयुक्तां छर्दिं दूरे परित्यजेत्।
असाध्या सर्वयोगैस्तु साप्यजीर्णा सुधीमता॥

इति छर्दिलक्षणम्।

सपञ्चमूलीक्वथितः कषायः ससैन्धवं चामलकञ्च कल्कः।
क्वाथं पिबन्मिश्रितपिप्पलीकं सवातच्छर्दिविनिवारणञ्च॥
दद्यात् क्षीरं शर्करया नरस्य पित्तोद्भूतां वातिशीघ्रं निहन्ति।
द्राक्षा वापि क्षीरकाकोलिचूर्णं लेह्यो हन्यात् सारघेयं पिबन्ती
फलत्रिकं पुष्करकं वचाञ्च तथा भयासैन्धवकं गुडेन।
चूर्णं विलिह्यात् कफवान्तिहन्त नरस्य मूत्रेण युतस्य पानम्॥
शठी दार्व्यभया शुण्ठी मागधी घृतसयुता।
चूर्णं तक्रेण संयुक्तं हन्ति छर्दिं त्रिदोषजाम्॥
रक्तशाल्योद्भवा लाजा मधुशर्करयान्विता।
ज्वरार्त्तिं प्रबलां शीघ्रं नाशयत्येव मे मतम्॥

आमलक्या रसेनाथ घृष्टं चन्दनकं मधु।
गुटिकामलमानेन लेहो हन्ति वमिं ध्रुवम्॥
आर्द्रदाडिमतिन्त्यामस्राजाजो शर्करान्विता।
सतैलमाक्षिकं वापि चत्वारः कवलग्रहाः॥
चतुरोऽरोचकान् हन्ति वाताद्यान् हृद्गजान् स्त्रियः।
चित्रकटुकरजनीद्वयञ्च फलत्रिकं मध्वा च यावशूकञ्च॥
समकृतामति चूर्णमेतन्मधुना युतं वमिं निवारयति।
सगुडं दाडिम द्राक्षा पथ्या वा नागरगुडयुक्ता॥
त्रिवृता नागरमथवा गुडेन युक्तं वमिं दर्षति।

इति वातच्छर्दिचिकित्सा।

पर्पटं सगुडं क्वाथं शीतलं पाययेन्नृणाम।
हन्ति वान्तिं महाघोरां सपित्तां भ्रमसंयुताम्॥
काकोली काकमाची च क्वाथं शर्करया युतम्।
लाजाशर्करसंयुक्तं हन्ति पित्तवमिं नृणाम्॥
मातुलुङ्गरसश्चैव पथ्याशर्करया युतः।
हन्ति कामं पित्तभवं वमिं शीघ्रं नियच्छति॥
दृष्ट्वा पित्तवमिं घोरां सदाहभ्रमदायिनीम्।
तस्यारग्वधपत्राणि मधुशर्करयान्वितम्॥
क्षीरपानं प्रशस्तं वा मुस्ताशर्करयान्वितम्।

इति पित्तच्छर्दिचिकित्सा।

जम्बाम्रकप्रवालानि दाडिमामलकं तथा।
मस्तुनोपोषितं पान हन्यात् श्लेष्मवमिं नृणाम्॥
मर्जार्जुनधवकदम्बककोलचूर्णं
शुण्ठीधन्याकसहितं सगुडं प्रदद्यात्।
श्लेष्मोद्भवं वमनमाशु निहन्ति पुंसां

शुण्ठीकणामधु विड़ङ्गयुतोऽपि लेहः ॥

इति श्री मच्छर्दिचिकित्सा ।

एलालवङ्गगजकेशरकोलमज्जा
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ।
चूर्णानि मार्कवसितामधुमिश्रितानि लीढ्वा
छर्दिं निहन्ति कफमारुतपित्तजाञ्च ॥

एलादलानि गजकेशरकर्णगोला-
लामज्जकं दरमजं घनकं प्रियङ्गुम् ।
संचूर्णितं मगधजामधचन्दनञ्च
लीढ्वा सितामधुमथो वमनं निहन्ति ॥

इति एलाद्यं भेषजम् ।

ऊर्द्ध्वभागगते दोषे विरेको हि प्रशस्यते ।
तस्मिन् जातेऽप्यधोभागे वमनं शाम्यति ध्रुवम् ॥
अथ द्विभागमापन्नेत्तदा देयाऽभया मधु ।
क्रिमिजं वमनं ज्ञात्वा क्रिमीणां शमनक्रियाः ॥
न चोष्णं नातिचाम्लञ्च न तीक्ष्णं न तथा लघु ।
तण्डुलीयकशाकं वा न मद्यं काञ्जिकं न तु ॥
वमिदोषे च कथितं पथ्यं चात्र शृणुष्व मे ।
आनूपं शालिभक्तं च शतपुष्पा च वास्तुकम् ॥
आढ़की मुद्गयूषञ्च दधि सर्पिर्गुडान्वितम् ।
अङ्गारमण्डका चाथ वमौ पथ्यं प्रशस्यते ॥
यथाबलं यथा कालं यथारोगं यथानलम् ।
तथा दृष्ट्वा प्रकुर्वन्ति पथ्यानां समुपक्रमम् ॥
दिवानिद्रां प्रयुञ्जीयाद् वमौ श्वासेऽतिसारके ।
हिक्काशोषे तथाजीर्णे वमिक्ले देऽथवा पुनः ॥

न चोष्णतोयपानञ्च नातिभोजनमेव च।
न धावनं च कर्त्तव्यं वर्जयेद्वमनार्दिते॥

इति श्रीमदृष्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने छर्दिचिकित्सा नाम त्रयोदशोऽध्यायः।

---

## चतुर्दशोऽध्यायः।

अथ तृष्णातालुशोषचिकित्सा।

आत्रेय उवाच।

भयात् श्रमाद्वीर्य्यहीनाद्रूचात् द्विदलसेवनात्।
आतपे वा ज्वरे जीर्णे क्षयाच्च क्षतजात् तथा॥
एते सङ्कुपिता दोषा वातपित्तकफास्त्रयः।
चतुर्थी क्षतजा प्रोक्ता पञ्चमी क्षयजा स्मृता॥
अजीर्णाच्च भवेत् षष्ठी सप्तमी रूक्षसेवनात्।
अष्टमी स्याज्ज्वरोत्पन्ना लक्षणानि शृणुष्व मे॥
क्षामः श्यावास्यता चाथ वैरस्यं वेपथुस्तथा।
वातेन सा भवेत् तृष्णा विज्ञेया भिषजां वरैः॥
शीततोयाभिलाषश्च भ्रमदाहप्रलापकः।
मूर्च्छा च लोहिते नेत्रे तृष्णा पित्तोद्भवा मता॥
निद्राश्यावास्यताऽलस्यं बलासोष्णाभिलाषता।
घनश्यावाङ्गशैत्यञ्च श्लेष्मणो जायते तृषा॥
हृच्छूलं वमते दाहो भ्रमो वा शिरसो व्यथा।
वेपथुश्चाङ्गशैत्यञ्च त्रिदोषप्रभवा तृषा॥

इति त्रिदोषतृष्णालक्षणम्

वक्त्रशोषो भवेज्जृम्भा शिरोऽर्त्तिर्गुरुतोदरे।
अजीर्णेनाथ मनुजे तृष्णा संलक्ष्यते गदः॥
रसक्षये यदा तृष्णा तदा क्षामः क्षुधातुरः।

ग्लानिः शोषो भ्रमः श्वासो दैन्यमाशु प्रवर्त्तते ॥
चतचयेषु या तृष्णा तस्या नामाभिनन्दनम्।
अन्या ज्वरातुरे प्रोक्ता तृष्णा सा ज्वरवेगजा ॥
अन्याऽतिसारे शूले वा तृष्णा ज्ञेया भिषग्वरैः।
तृष्णातिसारवमनदाहमूर्च्छास्तृषोद्भवाः ॥
न याति तृप्तिं तोयेनाऽसाध्यां ताञ्च विदुर्बुधाः ॥

इति तृष्णालक्षणम्।

तृष्णां वातोद्भवां दृष्ट्वा शस्यते सगुड़ं दधि।
सगुड़ं वाऽमृताक्काथं पीतं वाततृषापहम् ॥
शुण्ठीं लवजाज्या सह शृङ्गवेरं जलेन सौवर्चलयुक्तकल्ककम्।
पिबेत् कषायं च सुशीतलं वा वातोद्भवां चाशु निहन्ति तृष्णाम्

इति वाततृष्णा।

काश्मर्य्यं पद्मकोशीरं द्राक्षा मधुकचन्दनम्।
बालकं शर्करायुक्तं क्काथं पित्ततृषापहम् ॥
वटद्रुमो रोध्रसिता च चन्दनं सदाड़िमं तण्डुलधावनेन।
पिष्टं सुशीतेन जलेन वापि पीतं च पित्तोत्थतृषापहञ्च ॥
कुष्ठमुत्पलं लाजाश्च न्यग्रोधस्य प्ररोहकान्।
संचूर्ण्य शर्करायुक्ता गुटिका तृड्विनाशिनी ॥
द्राक्षोत्पलं यष्टिमधु शस्तमिक्षुनिपेषणम्।
पीतं पित्तोद्भवां तृष्णां हन्ति दाहञ्च पित्तजम् ॥
आकण्ठं शर्करायुक्तं क्षीरं वापि पिबेन्नरः।
वमनञ्च तदा कृत्वा हन्ति तृष्णां सपैत्तिकीम् ॥
लोष्ट्रप्रतप्ततोयञ्च निर्व्वाप्य शीतलीकृतम्।
पिबेत् तृष्णाविनाशाय जलं वा चन्दनान्वितम् ॥

इति पित्ततृष्णा।

जम्ब्वाम्रकप्रवालानि तथा लाजा च चन्दनम् ।
धातकीकुसुमानि स्युः पिष्टवासारसैर्युतः ॥
श्लेषतृष्णापहो लेहो दाहमूर्च्छाभ्रमापहः ।
पिबेच्चाढ़कयूषञ्च लाजाशर्करयान्वितम् ॥
क्षीरपानं समरिचं जलं वा मरिचान्वितम् ।
श्लेषतृष्णाविनाशाय पिबेद्वा कौलकं पयः ॥

इति श्लेषतृ०

दुरालभा पर्पटकं प्रियङ्गु लोध्रद्रुमं त्र्यूषणकं सकुष्ठम् ।
क्वाथः सुशीतो मधुशर्करायास्तृष्णां त्रिदोषप्रभवां निहन्ति

कोलदाडिमवृक्षाम्लाः सारिवा समशर्करा ।
पथ्या दाड़िमचूर्णं वा मातुलुङ्गरसान्वितम् ॥

इति त्रिदोषतृ०

काष्ठपात्रे शृतं सम्यक् शीतलं सलिलं तथा ।
मर्दितं बहुवारं वा तत्र पानीयञ्च पाययेत् ॥
तालुशोषे घृतं तत्र दापयेच्च भिषग्वरः ।
तृष्णादाहभ्रमच्छर्दिशोषमूर्च्छां व्यपोहति ॥
क्षतजां क्षयजां तृष्णां वारयत्याशु निश्चितम् ।
दाड़िमं कोलचुक्रीका वृक्षाम्लं चाम्लवेतसम् ॥
रसं चैव तथा पथ्यायुक्तं तालुप्रलेपनम् ।
वारयत्याशु शोषं च तृष्णां हन्ति च सज्वराम् ॥

इति दाडिमकोल

केशरं मातुलुङ्गस्य पिष्टं तण्डुलवारिणा ।
प्रतप्तमधुना तालुलेपः शोषापहः परः ॥
मधुशर्करया तालुलेपः शोषनिवारणः ।
पद्मकन्दशृतालेपः शीतः शीतलवारिणा ॥
तालुशोषं निहन्त्याशु जम्ब्वाम्रपल्लवानि च ।

निम्बान् वा मातुलुङ्गान् वा सौवीरं नागराणि च ॥
शोफार्त्तः पुरतो भवेत् न देयं तस्य धीमता।
दर्शनात्तस्य चास्ये च लाला प्रस्रवते भृशम् ॥
तेनास्य शोषं हरति तृष्णामपि नियच्छति।
रक्तशाल्योदनं शस्तं दधि शर्करयान्वितम् ॥
भोजनञ्च प्रशस्तञ्च न क्षारं कटुकं पुनः।
शोषे च छर्दितृष्णायां श्रमे पानात्ययेऽपि च।
अतीसारे च शोषे च दिवानिद्रा सुखावहा ॥

इति श्रीमहर्षिविप्रभाषिते हारीतोत्तरे तृतीयस्थाने तृष्णातालुशोषचिकित्सा नाम चतुर्दशोऽध्यायः।

---

## पञ्चदशोऽध्यायः।

अथ मूर्च्छाचिकित्सा।

आत्रेय उवाच।

रक्ताभिघातातिनिरोधकेन चौगच्चताहे हृषितेन वापि।
विरुद्धयुक्तान्नविभक्षणेन दोषः प्रदुष्टः प्रकरोति मूर्च्छाम् ॥
पञ्चेन्द्रियाणां संलग्नाः प्रत्येके द्वादशादयः।
पञ्चेन्द्रियाणां सहिता नाड़िकाः षष्टिसंख्यया ॥
रुन्धन्ति नाड़िकाद्वारं तेन चेतो विमूर्च्छति।
संज्ञानाशाद् भवेच्छीघ्रं निश्चेतास्र सदा नरः ॥
पतते काष्ठवत् तूर्णं मोहमूर्च्छा निगद्यते।
सा षड़्विधा समुद्दिष्टा वातपित्तकफात् तथा ॥
शोणितादभिघातेन मद्येनाथ विषेण वा।
एतेषां कोपयेत् पित्तं मरुद्रक्ते समीरितम् ॥
संज्ञादौर्बल्यकं तेन मूर्च्छामोहः प्रकथ्यते।

कथयामि समासेन लक्षणानि पृथक् पृथक् ॥
नीलं कृष्णारुणं पश्येत् तमः प्रविशति क्षणात् ।
कम्पो मार्दवमेतासां क्षणेन प्रतिबुध्यते ॥
वातेन मूर्च्छा भवति कृशता विकृतास्यता ।
नेत्रप्लावश्च सृष्टिश्च आध्मानञ्च भवेत् क्षणम् ॥
पीतञ्च नीलहरितं तमः प्रविशते भृशम् ।
सन्तापश्च पिपासा च रक्ते पीते च लोचने ॥
सस्वेदं शरीरं चापि भ्रमः सभिन्नवर्चसाम् ।
पित्ताद्भवति मूर्च्छात्वं जायते च शिरोव्यथा ॥
धूमाकुलां दिशं पश्येत् तमः पश्यति यः पुरः ।
नेत्राकुलत्वं मन्दाग्निस्तस्याऽङ्गेषु च शीतता ॥
चिरात् प्रबुध्यतेऽत्यर्थं कण्ठश्च घर्घरायते ।
हृल्लासमूर्च्छा भवति कफजा च विलक्षणा ॥
सन्निपातादपस्मारो दृश्यते भिषजां वर ! ।
स प्राणिनं घातयति रक्तेन सहितो यदि ॥
स प्राणिघातं कुरुते नरं चाशु तमोवृतम् ।
रक्तगन्धेन मूर्च्छन्ति तेन मूर्च्छा शिरोव्यथा ॥
कम्पते नष्टचेष्टत्वं जल्पते वमते पुनः ।
विभ्रान्तचेता रक्ताक्षः स्वप्नशीलः सुरावशः ॥
चतत्त्वयाद्भवेत्तान्या कोद्रवान्ननिषेवणात् ।
जायते मोहमूर्च्छा च तेन निद्रातिदुर्मनाः ॥

पित्ताधिक्याद्भवति वै मनुजस्य मूर्च्छा
पित्तप्रभञ्जनभवं भ्रममेव पुंसाम् ।
वातात् कफाद् भ्रमयुता मनुजस्य तन्द्रा
निद्रा कफानिलभवा भजते नरस्य ॥

इति मूर्च्छालक्षणम्

स्वेदाभिषङ्गविधिमर्दनवातशान्त्यै
शीतान्नपानव्यजनानिलपित्तशान्त्यै।
कषायपानमपि तथैव सदा प्रशस्तं
श्लेष्मोद्भवा विनिहिता भ्रममूर्च्छना वा॥
पाययेत् त्रिफलाक्वाथं शीतं शर्करया युतम्।
दुरालभायाः क्वाथञ्च पाययेत् शर्करान्वितम्॥
कणां कोलस्य मज्जाञ्च केशरीशीरचन्दनम्।
पिष्ट्वा शीताम्बुना खण्डपानं हन्ति विमूर्च्छितम्॥
रक्तजां मूर्च्छनां दृष्ट्वा विधेयः शीतलो विधिः।
चयजे दुर्बले क्षीणे मूर्च्छापोषणकारणम्॥
नष्टचेष्टत्वमापन्ने नरे सञ्चेतनक्रिया।
संपीड्य च नराङ्गुष्ठं नासिकां च प्रपीड़येत्॥
दन्तैर्वा मन्दशैर्वापि शनैर्गात्रं प्रपीड़येत्।
दाहयेद्वा ललाटे तु पृष्ठदेशे च भालके॥
एव न सिध्यते यत्र तदा चान्दोलनं हितम्।
मूर्च्छातुरं विमलशीतजलेन सिञ्चेत्
संवीजयेच्च शिखिपिच्छकवीजनैस्तु।
दोलायनं हि विहितं मनुजस्य मूर्च्छा-
मोहं भ्रमञ्च हरते च मदात्ययं वा॥

इति मूर्च्छाचिकित्सा।

करञ्जवीजं सह सैन्धवेन रसोनपत्रस्य रसश्च तत्र।
मार्कं च पैप्पल्यञ्च वचा जलेन पिष्ट्वाऽञ्जनं हन्ति दिनस्य तन्द्राम्॥
घोटकलालामरिचं लवणयुतं नेत्रयोरञ्जनं शस्तम्।
विनिहन्ति दिनगतां तन्द्रां निद्रां वा मानुषस्य॥
सुगन्धं सुकषायोपयुक्ता रसस्त्रिफला गुड़ार्द्रकं प्रातः।
सप्ताहाम्मधुरजलं हन्ति मदमूर्च्छाकरानुन्मादान्॥

रक्ताकर्षणमिच्छन्ति मोहमूर्च्छाप्रशान्तये ।
तस्मादवहितः कुर्य्यात् तासु रक्तावसेचनम् ॥

इति मूर्च्छामदभ्रमचिकि०

शीतसेकावगाहाद्यं श्रीखण्डं व्यजनानिलान् ।
शीतानि चान्नपानानि सर्वमूर्च्छासु योजयेत् ॥
शर्करेक्षुरसद्राक्षावातमूर्च्छाप्रपानकैः ।
काश्मर्य्यमधुकैरेव पित्तमूर्च्छां जयेन्नरः ॥
यष्ट्याः क्वाथं शृतं सर्पिः शृतं वामलकीरसम् ।
पिबेद्रसं पिबेल्लाजायुक्तं चाम्बु च शीतलम् ।
मधुना हन्ति वै मूर्च्छामालिप्यञ्च प्रबोधयेत् ॥

इति श्रीमदात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने मूर्च्छाचिकित्सा नाम पञ्चदशोऽध्यायः ।

---

षोड़शोऽध्यायः ।

क्षुधितानां गीतैर्नृत्याद्यैस्तन्द्रां निद्रां दिवा जयेत् ।
यदा रात्रौ न निद्रा स्यात् तदा कुर्य्यादिमां क्रियाम् ।
काकमाच्यास्तु मूलञ्च शिखां बद्धा भिषग्वरः ।
अधोमुखीं शिखां बद्धा निद्रां जनयते निशि ॥
मस्तुना पादतलकौ मर्दयेन्निद्रयार्थिनाम् ।
यस्य नो दिवसे निद्रा तस्य निद्रा निशासु च ॥
भयचिन्तालोभहेतोर्या निद्रा न भवेन्निशि ।
तां चिन्तां च परित्यज्य निद्रा सञ्जायते क्षणात् ॥
सिंही व्याघ्री सिंहमुखी काकमाची पुनर्नवा ।
वार्त्ताकानां च मूलानां क्वाथो निद्राकरो नृणाम् ॥

काकजङ्घा त्वपामार्गः कोकिलाक्षः सुपर्णिका।
क्काथो निद्राकरः शीघ्रं मूलेन बन्धयेच्छिखाम्॥

इति श्रीमदृष्यात्रियभाषिते हारीतोत्तरे तृतीयस्थाने तन्द्राचिकित्सा नाम षोडशोऽध्यायः।

---

## सप्तदशोऽध्यायः।

अथ मदात्ययचिकित्सा।

आत्रेय उवाच।

हालाहलाहलसमं भजते वियोगात
मेध्यानां शिष्यानुजानां कथितं मुनीन्द्रैः।
तृष्णा वमिः श्रमनमोहनदाहतृष्णा
मज्जायनेऽतिमरणं विकलेन्द्रियत्वम्॥
ये नित्यसेवनादृष्टा मद्यस्य मनुजा भृशम्।
विषमाहारसदृशी सुरा तेषाञ्च मोहनी॥
यथा विषं प्राणहरं वियोगाद् योगेन तं चाप्यमृतं वदन्ति।
तथा सुरा योगयुता हिता स्यात् अयोगतश्चारभतेऽतिकष्टम्॥
क्षुधातुरे तृषाक्रान्ते सुरा वा भोजनं विना।
न च जीर्णैर्विना भक्ता विनाहारातिपानकम्॥
अत्यशनेऽप्यजीर्णेऽपि सुरा पीता रुजाकरी।
यस्य प्रलपनं चापि न च वातमदात्ययः।
दाहमूर्च्छातिसारश्च ज्वरः पित्तमदात्यये॥
छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवम्।
शीतता च प्रतिश्यायः कफजे च मदात्यये॥
त्रिषु दोषेषु समता लिङ्गैर्येषामुपक्रमः।
स त्रिदोषसमुद्भूतो भिषग्वर! मदात्ययः॥

वमने तु प्रशस्तश्च निद्रासंसेवनं पुनः ।
स्नानं हितं पयःपानं भोजने सगुड़ं दधि ॥
मस्तुखण्डं सखर्जूरं मृद्वीका दाड़िमाम्लिका ।
आमला च परूषश्च लेह्यो हन्ति मदात्ययम् ॥
द्राक्षामलकखर्जूरपरूषकरसेन वा ।
कल्कयेत् पयसा तत्तु पानं सर्वमदात्यये ।
पथ्याक्काथेन संयुक्तं पयःपानं मदात्यये ॥

इति मदात्ययचिकित्सा ।

अथ पूगीफलमदात्ययचिकित्सा आरभ्यते ।

पूगीफलमदे कम्पो मोहो मूर्च्छा क्लमस्तमः ॥
प्रस्वेदो विधुरत्वश्च लालास्रावश्च जायते ।
भ्रमक्लमपरीतत्वं विज्ञेयं पूगमूर्च्छिते ॥
मानवो लक्षणैरेभिर्ज्ञेयः पूगविमूर्च्छितः ।
तस्य शीतं जलं पीतं वस्तिवातहितं भवेत् ॥
शर्करा भक्षणे देया मुस्ता वा शर्करान्विता ।
कोद्रवान्नभवमूर्च्छायां देयं क्षीरं सुशीतलम् ॥
धुस्तूरकमदे देयं शर्करासहितं दधि ।
फलिनी करवीरश्च मोहिनी मदयन्तिका ॥
अन्येषामपि कन्दानां वमनश्चाशु कारयेत् ।
पाययेत् शर्करायुक्तं क्षीरं वा दधि शर्कराम् ॥

इति श्रीमदार्त्रेयभाषिते हारीतोत्तरे तृतीयस्थाने मदात्ययचिकित्सा नाम सप्तदशोऽध्यायः ।

---

# अष्टादशोऽध्यायः।

## अथ दाहचिकित्सा।

आत्रेय उवाच।

समानः संक्रुद्धो रुधिरमपि पित्तं त्वचि गते
नरस्याङ्गे दाहं भवति नितरां घोरमपि च।
क्वचिद्दन्तोद्धर्षो भवति मनुजां दाहजनितो
भवेत् शीतस्यार्त्तिः श्वसनमपि वा शोषमरतिः॥
पित्तज्वरसमानानि लक्षणानि भिषग्वर!।
पित्तज्वरवदारभ्या क्रिया दोषोपशान्तये॥
कुशकाशेक्षुमूलानामुशीरं घनवालुकौ।
क्वाथः शर्करया युक्तः शीतदाहं नियच्छति॥
पर्पटः सघनोशीरः क्वथितः शर्करान्वितः।
शीतपानं निहन्त्याशु दाह्यं पित्तज्वरं नृणाम्॥
लामज्जचन्दनोशीरैर्लेपनं दाहशान्तये।
वीजयेत् तालवृन्तैश्च कदल्यम्भोजसंस्तरे॥
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम्।
शस्यते शीतलं वारि दाहतृष्णानिवारणे॥
उत्तानस्य प्रसुप्तस्य नाभेरुपरि धारयेत्।
कांस्यपात्रं तथा हृद्यं धाराभिः शीत वारिणः॥
पूरयेत् सततं यत्नात् तेन सौख्यं समश्नुते।
शतधौतं घृतं वापि तद्दाहोपरि धारयेत्॥
मधु धात्रीफलं वापि सिताजलविलेपनम्।
दाहशोषातुरस्यापि लेह्यं वा सुखकारकम्।
जम्ब्वाम्रपल्लवान् निम्बं वीजपूररसेन तु॥
पिष्ट्वा प्रलेपनं दाहे शीघ्रं सुखमभीप्सति।
धारागारमथो सुशीतलशशी ज्योत्स्ना च पानानि च

वातः शीतलचन्दनञ्च कमलं प्रेमानुबन्धस्तथा।
रामागूहनमर्दनं स्तनयुगे शुक्लार्द्रवस्त्राणि च
चीरं शर्करशङ्खलोहरजतं दाहप्रशान्त्यै हितम्॥

इति श्रीमहर्षात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने दाहचिकित्सा नाम अष्टादशोऽध्यायः।

---

## ऊनविंशोऽध्यायः।

### अथापस्मारचिकित्सा।

आत्रेय उवाच।

पित्तं मरुच्च श्लेष्मा च उदानः कुपितो भृशम्।
प्राणः शिरसि सङ्कुप्य कुरुते नष्टचेष्टताम्॥
प्राणान्नयत्यचैतन्यं नाड़ीं चेन्द्रियरोधनम्।
पतते काष्ठवल्लोको मुखे लालां विमुञ्चति॥
कण्ठश्च घुर्घुरायेत फेनमुद्गिरतेऽथवा।
कम्पते हस्तपादौ च रक्तव्यावर्त्तिलोचनम्॥
अपस्मारे च लिङ्गानि जायन्ते भिषजां वर!।
व्यावृत्तं लोचनं चामं तमो दाहः शिरोव्यथा॥
हतप्रभेन्द्रियसंज्ञश्चापस्मारी विनश्यति।
तस्य पानाञ्जनालेपमर्दनं पानमेव च॥
उपाचर्य्यमपस्मारे घृतं तैलञ्च धीमता।
अगस्तिपत्रं मरिचं मूत्रेण परिपेषितम्॥
नस्ये शस्तमपस्मारं हन्ति शीघ्रं नरस्य तु।
बन्ध्याकर्कोटिकामूलं घृतं शर्करयान्वितम्॥
नस्ये वापि प्रयोक्तव्यमपस्मारप्रशान्तये।
कुष्माण्डखण्डाश्च रसाश्च पक्वाः सत्रूषणैलादलनागकेशरम्।
कुमेथिकाग्रन्थिकधान्यकानां समांशकेनापि सिता प्रयोज्या॥

प्रभातके भक्षणकं विधेयं तस्योपरि क्षीरमितं प्रशस्तम्।
निहन्त्यपस्मारविकारमाशु प्रणाशयेत् शीघ्रमसृग्विकारम्॥
कुष्माण्डब्राह्मी षड्ग्रन्था शङ्खपुष्पी पुनर्नवा।
सुरसासहितं चूर्णं शर्करामधुसंयुतम्॥
अपस्मारविनाशाय भक्षणे हितमेव च।
उन्मादे पित्तरक्ते च वन्ध्याया गर्भदायकम्॥
रास्नामागधिकामूलं दशमूलं शतावरी।
शर्णाचित्रकस्तथैरण्डो भागान् द्विपलिकान् क्षिपेत्॥
यष्टिमधुकमृद्वीका शङ्खपुष्पी शतावरी।
रास्ना समङ्गा शृतकं त्रिसुगन्धञ्च भीरुकम्॥
कुष्ठं तद्दीपकञ्चैव घृतं योज्यं भिषग्वरैः।
हन्त्यपस्मारमुन्मादं रक्तपित्तं गुदामयम्॥

इति कुष्माण्डकं नाम घृतम्।

ब्राह्मीरसवचाकुष्ठशङ्खपुष्पीभिरेव च।
पचेत् घृतं पुराणञ्च अपस्मारं नियच्छति॥

इति ब्राह्मीघृतम्।

महाबलाद्यं तैलञ्च वस्तौ नस्ये प्रशस्यते।
शतावर्य्यादिकञ्चापि सदैव च हितं भवेत्॥
चन्दनाद्यं घृतञ्चैव प्रयोज्यं चात्र चोत्तमैः।
अपस्मारे वाप्युन्मादे वातरोगेऽथवा हितम्॥
त्र्यूषणं त्रिफला हिङ्गु सैन्धवं कटुका वचा।
नक्तमालकवीजानि तथा च गौरसर्षपाः॥
वस्तमूत्रेण पिष्टा तु गुटी छायाविशोषिता।
अञ्जनं हन्त्यपस्मारमुन्मादञ्चैव दारुणम्॥
स्मृतिभ्रंशभ्रमी दोषभूतदोषविनाशनम्।
ऐकाहिकं द्व्याहिकञ्च ज्वरं चातुर्थकं हरेत्॥

तिमिरं पटलं हन्ति रात्र्यन्धञ्च शिरोरुजम् ।
सन्निपातविस्मरणं चेतयत्याशु मानवम् ॥

इति त्रूषणाद्या गुटिका ।

चन्दनं तगरं कुष्ठं यष्टीत्रिगन्धवासकम् ।
मञ्जिष्ठाभीरुमृद्वीकापाठाश्यामाप्रियङ्गुभिः ॥
स्वयंगुप्ता पीलुपर्णी विषा रास्ना गवादनी ।
काकोल्यौ जीवकं मेदे पुष्करं घनवालुकम् ॥
बिदारी चैव वासन्ती वृद्धं दन्ती विडङ्गकम् ।
पद्मकश्चेन्द्रवृक्षश्च तथारग्वधचित्रकम् ॥
धान्यकं पञ्चजीरेण तथा तालीशपत्रकम् ।
खादिरं नगरञ्चैव कालीयकञ्च केकतम् ॥
नागकेशरकञ्चैव परूषञ्च समांशिकम् ।
सखर्जूरं भिषक् सम्यक् सर्वमेकत्र मर्दयेत् ॥
भावितं पुनरेवञ्च मधुना सघृतेन च ।
लेह्योऽयञ्च सदा शस्तश्चापस्मारेऽतिदारुणे ॥
उन्मादे कामलारोगे पाण्डुरोगे हलीमके ।
राजयक्ष्म रक्तपित्ते पित्तातिसारपीड़िते ॥
रक्तातिसारे शोषे च शिरोरोगे सदाज्वरे ।
तमकभ्रमके छर्दिदाहे च समदात्यये ॥
अश्मर्य्याञ्च प्रमेहेषु कासे श्वासे च पीनसे ।
एतेषाञ्च प्रयोक्तव्यः सर्वरोगनिवारणः ॥
वन्ध्यानाञ्च प्रयोक्तव्यो वृद्धानाञ्च विशेषतः ।
बालानाञ्च हितश्चैव शृणु चात्र प्रमाणकम् ॥
उत्तमे क्षीरमात्रञ्च पादहीनस्तु मध्यमे ।
दद्यात् क्षीरयुतं स्त्रीणां बालानं क्षीरसंयुतम् ॥
एवं प्रयोजितो रोगे महाकल्को मतो बुधैः ।

बलवान् गुणवांश्चैव भवतीह फलप्रदः ॥
वरकुञ्जरवाहानामुपयुक्तो हितो मतः ।
भिषग्भिः कथ्यते लेहः कृष्णात्रेयेण पूजितः ॥

इति चन्दनाद्यं चूर्णम् ।

द्राक्षा दारु तथा निशा च मधुकं कृष्णा कलिङ्गा त्रिवृत्
यष्टिका त्रिफला विडङ्गकटुकास्तक्चन्दनं दाडिमम् ।
चातुर्जातकनिम्बकाच तुरगी तालीशपत्रं घना
मेदे द्वे सुरदारु कुष्ठकमलं रोध्रं समङ्गा वरी ॥
भार्गीकोलकदाडिमाम्लसहितं काश्मर्य्यशृङ्गाटकं
काम्बोजा शणघण्टिका लघुतरा क्षुद्रा च रास्नायुतम् ।
चूर्णं शर्करया समं मधु घृतं खर्जूरकैः संयुतं
लिह्यात् कर्षमिदं समस्तवलकृत् हन्यादपस्मारकम् ।
उन्मादञ्च सुदारुणं क्षयमथो यक्ष्मा च पाण्डुं गदं
कासासृग्रुधिरप्रमेहगुदजं स्त्रीणां हितं शस्यते ॥

इति द्राक्षावलेहः ।

एतैर्यदि न सौख्यं स्यात् दहेल्लोहशलाकया ।
ललाटे च भ्रुवोर्मध्ये दहेद्वा मूर्ध्नि मानवम् ॥
वर्जयेत् कटुकं चाम्लं रक्तपित्तविकारिणाम् ।
विशेषेण वर्जनीयं सुरापूगकषायकम् ।
न सेव्यानि ह्यपस्मारे मोहमूर्च्छाकराणि वा ॥

इति श्रीमुक्त्यर्थात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने अपस्मारचिकित्सा नाम ऊनविंशोऽध्यायः ।

——

## विंशोऽध्यायः ।

### अथोन्मादनिदानम् ।

आत्रेय उवाच ।

अयं मानसको व्याधिरुन्माद इति कीर्त्तितः ।
प्रमत्ता ऊर्द्ध्वगा दोषा ऊर्द्ध्वं गच्छन्त्यमार्गताम् ॥
उन्मादो नाम दोषोऽयं कष्टसाध्यो भिषग्वरैः ।
सोऽपि पृथग्विधैर्दोषैर्द्वन्द्वजोऽन्यः प्रकीर्त्तितः ॥
तथान्यः सन्निपातेन विषाद्भवति चापरः ॥

अशुचिविपथशून्यागारकेऽरण्यमध्ये
सभयगहनवीथीदेवतागारके च ।
अथ कथमपि भीत्याशङ्कया खिन्नचेतः
क्षुभितविविधचेष्ट स्त्याज्य उन्माद एति ॥
चिन्ताव्यथासुभयहर्षविमर्षलोभात्
देवातिथिद्विजनरेन्द्रगुरुप्रधर्षात् ।
प्रेमाधिकं युवतिजनस्य च विप्रयोगात्
उन्मादहेतु च नृणां कथितं वरिष्ठैः ॥

तेन गायति वा रौति विरूपं पठते तथा ।
लोलयेच्छर्दते वापि कम्पते हसते तथा ॥
धावते सहसा चैव चाकस्माच्चैव क्रन्दति ।
नरो वा भ्रमतेऽत्यर्थं पश्येद्दहनमथातुरः ॥
तस्यापस्मारकं कर्म कर्त्तव्यं भिषजां वरैः ।
विशेषेण भूतविद्यामध्ये वक्ष्यामि चाग्रतः ॥

इति श्रीमदात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने मूर्च्छानिदानं नाम
विंशोऽध्यायः ।

———

# एकविंशोऽध्यायः।

अथ वातव्याधिचिकित्सा।

आत्रेय उवाच।

चतुरशीतिर्विख्याता नृणाम् वाता रुजाकराः।
तेषां निदानं वक्ष्यामि समासेन पृथक् पृथक्॥
विरुद्धचिन्ताशनजागराश्च व्यायामतश्चापि तमोऽभिषङ्गात्।
असृग्विरेकाद्विषमासनेन सन्धारणात् प्राणसमानरोधात्।
अध्वश्रमक्षीणबलेन्द्रियाणामासन्नतो धातुगतोऽपि वायुः॥
प्राणापानसमानश्च उदानो व्यान एव च।
एषां दोषाद्भवन्त्येते वातदोषाः पृथक् पृथक्॥
शिरःशूलं कर्णशूलं शङ्खशूलमसृग्गदः।
अर्द्धशीर्षविकारश्च दिनवृद्धिसमुद्भवः॥
नासिकोपद्रवो वापि मन्यास्तम्भो हनुग्रहः।
जिह्वास्तम्भस्तालुशूलं तथा च तमकं भ्रमः॥
तन्द्राश्वासगलाद्याश्च षोड़शैते शिरोगताः।
प्राणप्रकोपतो यान्ति पित्तेन सममीरिताः॥

इति षोड़शविधशिरोगतप्राणवायुप्रकोपः।

भगन्दरो वस्तिशूलो मेढ्रार्शश्चातिकोठकः।
लिङ्गदोषो गुदभ्रंशस्तथान्यो गुदशूलकः॥
मूत्ररोधो विड्विरोध एते दश विजानता।
अपानस्य प्रकोपेन विज्ञेयास्तु प्रधानतः।
एते विकाराः कथिता विस्ताराश्च प्रकीर्त्तिताः॥

इति दशविधापानवायुप्रकोपः।

शूलं गुल्म उदावर्त्त आध्मानोदररुक् तथा।
परिणामो विषमाग्निरजीर्णं वातगुल्मकः॥
परिक्लेदी रसशेषो रसश्च मलवाहकः।

बन्धी भेदी विलासी च षोड़शैते समानतः ॥

इति षोड़शविधसमानप्रकोपः ।

हिक्काश्वासः परिश्वासः कासः शोषार्त्तिघर्घिका ।
हृल्लासो हृदिशूलश्च यकृद्दाताविका वमिः ॥
क्षवथुर्जृम्भणञ्चैव तथा वैस्वर्य्यपीनसः ।
अरुचिश्च प्रतिश्याय एते प्रोक्ता उदानतः ।
उदानः श्लेष्मसंयुक्तो दोषात् हृदि प्रकुप्यति ॥

इति षोड़शविधोदानप्रकोपः ।

हृदिस्तम्भः पृष्ठस्तम्भ ऊरुस्तम्भश्च गृध्रसी ।
पृथक् तेन च कथितमग्रे शृणुष्व कोविद! ।
एते व्यानप्रकोपेन षोड़शैव प्रकीर्त्तिताः ॥

इति व्यानप्रकोपः ।

वक्ष्यामो व्याननाम्नस्तु मारुतस्य प्रकोपनम् ।
वातः सर्वाङ्गको धातुविकारं कुरुते भृशम् ॥
स च धातुगतो ज्ञेयस्तथा प्रोक्तः पृथक् पृथक् ।
त्वग्गते रोमहर्षश्च मन्यास्तम्भनमेव च ॥
मांसगे शोथतोदश्च मेदोगे चैव कम्पनम् ।
भङ्गतास्थिगते वाते पतनं मज्जगे भवेत् ॥
शुक्रगे सन्धिशोथश्च तस्मात् त्वग्वातलक्षणम् ।
एतैर्धातुगतान् वातान् साध्यासाध्यान् निरोधयेत् ।
सत्वक्मांसमेदःस्थो वायुः सिध्यति भेषजैः ॥
अन्ये कष्टेन सिध्यन्ति न सिध्यन्त्यथवा पुनः ।
लोमहर्षो भवेत् तादो निद्रानाशोऽरुचिस्तमः ॥
गात्रं सूचीव विध्येत भ्रमन्त्येव पिपीलिकाः ।
रूक्षत्वं त्वग्रसे नेत्रे श्यामत्वं जायते पुनः ॥
रजसः शुक्रस्य गर्भस्य नाशो भवति वेपथुः ।

मन्दाग्निलञ्च भवति स्वप्नानि च स पश्यति ॥
निद्रानाशः क्षोभयति सामान्यं वातलक्षणम्।
मुहुराक्षेपयेद्गात्रं भेदस्तोदो बहुस्वरः।
स चैवाक्षेपको नाम जातो व्यानप्रकोपतः॥

इत्याक्षेपको वायुः।

धनुर्वन्नाम्यते गात्रमाक्षिपेच्च मुहुर्मुहुः।
प्रक्लिन्ननेत्रः स्तब्धाक्षः कपोत इव कूजति।
तमाहुर्भिषजां श्रेष्ठा अपतन्त्रकनामतः॥

इति अपतन्त्रको वायुः।

मतान्तरे वदन्त्यन्ये बहूपतानको मतः।
गृह्णीत्वार्द्धं ततो वायुः सोऽपतानक संज्ञितः॥

इति अपतानको वायुः।

सोऽपि कफाश्रितो वायुः सम्पीड़यति दण्डवत्।
स्तम्भयत्याशु गात्राणि सोऽपि दण्डापतानकः॥
हृदक्षीजकराङ्गुलि गुल्फसन्धौ समाश्रितः।
स्नायुं प्रतानयेद् यस्तु सोऽपि स्नायुप्रतानकः॥
वाह्यानामथ नाड़ीनां प्रतानयति मारुतः।
कट्याश्रितो वा भवति सशल्यमिव कुर्वते॥
तमसाध्यं बुधाः प्राहुस्तञ्च वातं प्रतानकम्।
अन्यं चतुर्थमाक्षेपमभिघातसमुद्भवम्॥
अभिघातेन यो जातो न स साध्यः प्रतानकः।
ऊर्द्धं तालुगतो यस्तु विशोषयति गात्रकम्॥
मोहे तमःकृते वास्थिसन्धिसंशुष्कको मतः।
कच्छ्रार्द्धकर्षं भवति शुष्कतालुः प्रमुह्यति॥
पुष्णात्यर्द्धं क्षयत्यर्द्धं स तथैकाङ्गिको मतः।

इति एकाङ्गिकपक्षघातवायुः।

एकाङ्गपक्षघातश्च भवत्यन्यतमो यदि ।
वातघ्नैरौषधैः सर्वैर्वायुः कष्टेन सिध्यति ॥

इति एकाङ्गरोगपक्षघातः ।

तोदो मूर्च्छा वेपनं स्यात् वेष्टता स्पर्शनाशता ।
यस्तु नश्यति गात्राणि वायुस्तूनीतिशब्दितः ॥
वेपनं तोदवेष्टत्वं स्पर्शनं वेत्ति यः पुनः ।
प्रतूनयति गात्राणि प्रतितूनीति गद्यते ॥

इति प्रतितूनीवायुः ।

सन्तापदाहशोषाश्च मूर्च्छा पित्तान्वितो मरुत् ।
शैत्यं शोफारुचिर्जाड्यं वातश्लेष्मसमन्वितम् ॥
यो द्वन्द्वजाश्रितो धीर ! तं साध्यं मारुतं विदुः ।
केवलोऽपि समीरोऽपि सोऽपि साध्यतमः स्मृतः ॥
वक्त्रं भवति वक्रार्द्धं ग्रीवा चाप्युपवर्त्तते ।
वैकृत्यं नयनानाञ्च विसंज्ञो वेदनातुरः ॥
ग्रीवायां गण्डयोर्दन्तपार्श्वे यस्यातिवेदना ।
तमर्दितमिति प्राहुर्वातव्याधिविचक्षणाः ॥

इत्यर्दित नाम ।

लालास्रावोऽथ शोषश्च हनुग्रहो विरस्यता ।
दन्तशूलं भवेद् यस्य वातेनार्दितमेव च ॥
पीताङ्गं सज्वरं तृष्णा पित्तजो मोह एव च ।
शोफस्तम्भोऽस्य भवति कफोद्भूतेऽथवार्दिते ॥
भाविनो लक्षणं यस्य वेपथुर्नेत्रमाविलम् ।
क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिणः ॥
न सिध्यत्यर्दितं गाढं विषमस्यापि तस्य च ।
कण्ठरोधो भक्षणार्थं जृम्भा प्रस्तारिते मुखे ॥
हनुस्तम्भो भवत्येते कृच्छ्रसाध्या भवन्ति हि ।

विषमे वा दिवास्वप्ने विवर्त्तितनिरीक्षणे ॥
मन्यास्तम्भं जनयति कृच्छ्रात् पार्श्वं विलोकते ।
वाग्वादिनीं शिरां रुद्धा स्तम्भयेद्रसनानिलम् ॥
रक्ताश्रितोऽपि पवनः शिरोनाड्यां समाश्रितः ।
शिरोऽर्त्तिं कुरुते, यस्तु सोऽप्यसाध्यः शिरोग्रहः ॥

इति लक्षणम् ।

अतः प्रतिक्रियां वक्ष्ये यथा सिध्यति मारुतः ।
स्नेहनं रूक्षणं कार्य्यं पाचनं शमनानि च ॥
स्वेदनं मर्दनाभ्यङ्गौ वस्तिस्नेहो निरूहणम् ।
स्नायुसन्ध्यस्थि संप्राप्ते भेदनं कारयेत् सुधीः ॥
माणिमन्थेन यन्त्रेण ततः संभूषयानिलम् ।
असाध्ये शुक्रगे व्याने वीजवत् समुपाचरेत् ॥
मुण्डी गुडूची बृहतीद्वयं च रास्ना समङ्गा क्वथितः कषायः ।
सामुद्रकेणापि विमिश्रितं च दुग्धं दधि स्यान्नवनीतकञ्च ॥
पचेत् सुधीमान् मृदुवह्निना च सिद्धं घृतं स्नेहनमेव पुंसाम् ।
कर्षप्रमाणं विहितं च पाने चाभ्यञ्जने भोजनके तथैव ।
वस्तौ हितं स्नेहनमेव पुंसां सप्ताहकं वातविकारिणाञ्च ॥

इति स्नेहकं नाम घृतम् ।

अथ निरूहणम् ।

रास्नाविडङ्गरजनी सह नागरेण
सौवीरकेण सुरसा सह सैन्धवेन ।
सोष्णञ्च पानमिदमेव विरूक्षणञ्च
स्यान्नृणाञ्च पञ्चदिनकर्षमात्रमेव ॥
अतः स्यात् पाचनं सम्यक् दिनसप्तममेव तत् ।
पाचिते चैव दोषे च तस्मात् संशमनं ददौ ॥
वक्ष्यामि ते पृष्ठिगते धमन्या समाश्रिते च बहुधाशनेन ।
संस्वेदश्च नाशयते समीरं सप्ताहकं चोष्णजलेन सेकः ॥

रास्नात्रिकण्टकैरण्डशतपर्वा पुनर्नवा।
क्वाथो वातामयं हन्ति सर्वाङ्गगतमाशु च॥
रास्नागुडूचिकादारुनागरैरण्डसंयुतः।
क्वाथः सर्वाङ्गवातेऽपि समधातुगते हितः॥
रास्नाश्वगन्धाकाश्मीर्यं वचा च कपिकच्छुकम्।
क्वाथस्त्वेरण्डतैलेन पीतो हन्ति समीरणम्॥
रास्नाधान्यकशुण्ठी च यवानी दशमूलकम्।
क्वाथः पाचनके प्रोक्तो नरे वातविकारिणि॥
रास्नाद्यानि पाचनानि हितानि कथितानि च।
अर्द्धं पलं रसोनञ्च हिङ्गुसैन्धवजीरकैः॥
सौवर्च्चलेन संयुक्तं तथैव कटुकत्रिकम्।
घृतेन संयुतं भक्षेत् मासमेकं दिने दिने॥
निहन्ति वातरोगञ्च अर्दितं च प्रतानकम।
एकाङ्गरोगिणाञ्चापि तथा सर्वाङ्गरोगिणाम्॥
ऊरुस्तम्भं क्रिमिर्दोषं गृध्रसीर्वापि कर्षति।
पलार्द्धञ्च पलं चापि रसोनञ्च सुकुट्टितम्॥
हिङ्गुजीरकसिन्धूत्थं सौवर्चलकटुत्रयम्।
एभिः संचूर्णितैः सर्वैस्तुल्यं तैलेन संयुतम्॥
यथाग्नि भक्षयेत् प्रातः रुबुक्काथानुपानवत्।
मासमेकं प्रयोगेण सर्ववातामयान् जयेत्॥
एकाङ्गं चैव सर्वाङ्गमूरुस्तम्भं च गृध्रसीः।
कटिपृष्ठास्थिसन्धिस्थमर्दितं चापतन्त्रकम्।
ज्वरं धातुगतं जीर्णं नित्यञ्च सैकराह्नयम्॥

इति रसोनप्रयोगः।

नागरा च हरिद्रा च कणाजाज्यजमोदिका।
वचा सैन्धवरास्ना च मधुकं समभागिकम्॥

अश्वगन्धाचूर्णं पिबेच्चैव सर्पिषा प्रत्यहं नरः।
एकविंशतिदिनैर्वा रोगान् हन्ति न संशयः॥
भवेत् श्रुतिधरः श्रीमान् मेघदुन्दुभिनिस्वनः।
हन्ति वातामयान् सर्वान् लेहो यस्य सुखावहः॥
शतावरी वचा शुण्ठी रास्ना वदरशल्लकी।
दशमूली बला किण्वस्तुम्बुरु च गुडूचिका॥
एष कल्को घृतैर्युक्तो हन्ति वातं शरीरगम्।
शल्लकीचिक्कणीत्वक् च क्वाथस्तैलेन संयुतः॥
कुर्य्याद्वातार्दितं स्वस्थमेकविंशद्दिनैर्नरम्।
अतोऽभ्यङ्गश्च कर्त्तव्यस्तैलैरपि घृतैरपि।
गुग्गुलुश्च रसोनश्च कारयेद्विधिपूर्वकम्॥

इति संशमनीयः क्वाथः।

अथ वलाद्यं कथ्यते।

भागाश्चाष्टौ वलामूलं चत्वारो दशमूलकम्।
क्वाथश्चतुर्गुणे तोयेऽथवा द्रोणस्य संख्यया॥
तत्राढकं क्षिपेत् क्षीरमाढकं मिश्रयेद्दधि।
आढकञ्चाशु कुल्माषयूषं पर्य्युषितं क्षिपेत्॥
तैलं तिलानां द्रोणं तु कटाहे पाचयेच्छनैः।
जीवन्ती जीवनीया च काकोल्यौ जीवकर्षभौ॥
मेदे द्वे सरलं दारु शल्लकश्च कुचन्दनम्।
कालीयकं सर्जरसं मञ्जिष्ठा त्रिसुगन्धिकम्॥
मांसी शैलेयकं कुष्ठं वचा कालानुशारिवा।
शतावरी चाश्वगन्धा शतपुष्पा पुनर्नवा॥
किण्वकं च सुरा मुस्ता तथा तालीशपत्रकम्।
कटुत्रयं वालुकौ च सर्वं तत्रैव मिश्रयेत्॥
सिद्धं सर्वगुणं श्रेष्ठं कृत्वा मङ्गलवाचनम्।

सौवर्णे राजते कुम्भे वाथवा मृण्मयायसे ॥
प्रतप्तं धारयित्वा तु पानाभ्यङ्गे निरूहके ।
वस्तौ वापि प्रयोक्तव्यं मनुष्यस्य यथाबलम् ॥
वातार्दितेऽथवा भग्ने भिन्ने वापि प्रदापयेत् ।
या वन्ध्या च भवेन्नारी पुरुषश्चाल्परेतसः ॥
क्षीणो वा दुर्बलो वापि तथा जीर्णज्वरातुरः ।
आमवातातुराणाञ्च तथा प्रक्षिप्य कञ्चटम् ॥
प्रभाते च प्रयोक्तव्यं तथा शुष्के हनुग्रहे ।
कर्णशूले चाक्षिशूले मन्यास्तम्भे च पार्श्वगे ॥
सर्ववातविकाराणां हितं तैलं यथामृतम् ।
हन्ति श्वासञ्च कासञ्च गुल्मार्शोग्रहणीगदम् ॥
अष्टादशानि कुष्ठानि शीघ्रं वापि नियच्छति ।
ग्रहभूतपिशाचाश्च डाकिनी शाकिनी तथा ॥
दूरदेशे पलायन्ते बलातैलस्य दर्शनात् ।
अपस्मारादिदोषांश्च तच्च दूरे नियच्छति ॥
वृद्धो युवा च भवति वन्ध्या च लभते सुतम् ।
तैलं महाबलाद्यञ्च महावातहरं स्मृतम् ॥

इति महाबलाद्यं तैलम् ।

बलाक्वाथाढकं क्षिप्त्वा क्षिपेत् तत्राढकं दधि ।
कुलत्थाढकयूषन्तु सौवीरस्याढकं तथा ॥
एकत्र कृत्वा विपचेद्योजयेदौषधञ्च तत् ।
शतपुष्पा देवदारु पिप्पली गजपिप्पली ॥
त्रिसुगन्धि मुरामांसी कुष्ठञ्च दशमूलकम् ।
चूर्णकं निक्षिपेत् तत्र सिद्धं तदवतारयेत् ॥
योज्यं पाने तथाभ्यङ्गे निरूहे नस्यकर्मणि ।
हन्ति वातामयं सर्वं श्रेष्ठं गुणगणात्मकम् ।

यथा महाबलं तैलं तथेदं गुणवर्द्धनम् ॥

इति बलाद्यं तैलम्।

भृङ्गराजरसञ्चैव कटुतुम्बीरसं तथा।
सौवीरकरसं चैव क्वाथं वै दशमूलकम् ॥
माषकुल्माषयूषं च वाजं दधि समाश्रयेत्।
समांशकानि सर्वाणि तैलं चार्द्धं प्रयोजयेत् ॥
मृद्वग्निना पाचनीयं सिद्धं चैवावतारयेत्।
अभ्यङ्गे च प्रयोक्तव्यं न पाने वस्तिकर्मणि ॥
पूरणे कर्णरोगेषु शिरःशूले च दारुणे।
अर्द्धशीर्षविकारेषु भ्रुवः शङ्खाक्षिशूलके ॥
तस्य योगेन मनुजः सुखमाप्स्यते द्रुतम्।
हन्ति कुष्ठञ्च पामानं त्वग्रोगोऽभ्यञ्जनेन तु।
शीघ्रं विनाशमायाति हन्त्यपस्मारमुत्कटम् ॥

इति भृङ्गराजतैलम्।

सपित्ताविकलश्वासः पक्वामः पतति त्वधः।
न वस्तिशूलो भवति वामवाते श्रमः क्लमः ॥
आमपाकीति विज्ञेयो न कुर्य्यात् तस्य पाचनम्।
विरेचनं न कर्त्तव्यं स्तम्भनं तस्य कारयेत् ॥
कटिपृष्ठे वक्षोदेशे तोदनं वस्तिशूलता।
गुल्मवज्जठरं गर्जेत् तथान्त्रे शोफमेव च ॥
शिरोगुरुत्वं भवति वामि च पतते भृशम्।
सर्वाङ्गगो भवेत् सोऽपि विज्ञेयः सुविजानता।
तस्य वै पाचनं कुर्य्याद्विरेचनमतः परम् ॥
विष्टम्भी गुल्मपाकी च सर्वाङ्गगोऽन्यः कीर्त्तितः।
विज्ञेयस्तत्र यः साध्यस्तान्यौ द्वौ कष्टसाध्यकौ ॥
वेष्टी चामस्य कथितः कल्पापस्मारनिग्रहम्।

श्योनाकः पाटला विल्वं तर्कारी पारिभद्रकः ॥
अश्वगन्धा कण्टकारी शोथघ्नी च प्रसारिणी ।
श्वदंष्ट्रा च बला चैवातिबला समभागिका ॥
पादशेषं जलद्रोणे क्वथितं स्रावयेत्ततः ।
वक्ष्यमाणानि योज्यानि भेषजानि भिषग्वरैः ॥
शतपुष्पा वचा मांसी दारु शैलेयकं वरा ।
पतङ्गं चन्दनं कुष्ठं तथान्यं रक्तचन्दनम् ॥
करञ्जबीजांशुमती त्रिसुगन्धि पुनर्नवा ।
रास्ना तुरङ्गगन्धा च सैन्धवं च दुरालभा ॥
मिशी च सुरसा चैतत् प्रत्येकन्तु पलत्रयम् ।
चूर्णं कृत्वा क्षिपेत् तत्र क्षिपेत्क्षाचारसाढ़कम् ॥
शतावरीरसं चैव अजाक्षीरं चतुर्गुणम् ।
दधि तत्राढ़कं गव्यं तिलतैलं प्रयोजयेत् ॥
सिद्धं तत्र प्रदृश्येत ततो मङ्गलवाचनम् ।
प्रतिष्ठेनं प्रतिष्ठाप्य नारायणमिदं स्मृतम् ॥
हन्ति वातविकारांश्च अपस्मारग्रहांस्तथा ।
शिरोरोगान् कर्णरोगान् कुष्ठान्यष्टादशान्यपि ॥
बन्ध्या च लभते पुत्रं षण्ढोऽपि पुरुषायते ।
कृशो युवायते मूर्खो विद्याराधनतत्परः ।
नारायणमिदं तैलं कृष्णात्रेयेण भाषितम् ॥

इति नारायणं नाम तैलम् ।

अन्यानि घृततैलानि तानि चात्र प्रयोजयेत् ।
एतेन जायते सौख्यं वातरोगं नियच्छति ॥

इति श्रीमदार्षात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने वातव्याधिचिकित्सा नाम एकविंशोऽध्यायः ।

## द्वाविंशोऽध्यायः।

अथामवातचिकित्सा।

आत्रेय उवाच।

लक्षणं शृणु पुत्र! त्वं समासेन वदाम्यहम्।
गुर्वन्नाहारपुष्टेन मन्दाग्नेश्च व्यवायिनः॥
तर्पितैः कन्दशाकैस्तु आमो वायुसमीरितः।
श्लेष्मस्थाने प्रपच्येव जायते बहुवेदनः॥
आमातिसारो वर्त्तेत सन्धौ शोफः प्रजायते।
जरत्वञ्चैव गात्राणां वलासपतनं मुखे॥
पृष्ठमन्यात्रिके जाते वेदनार्त्तोऽपि सीदति।
अङ्गं वैकल्यमायाति आमवाते भिषग्वर!॥
तस्य नो स्नेहनं कार्य्यं पाचनञ्च विधीयते।
आमं संचयते प्राज्ञश्चतुर्धा भेदलक्षणैः॥
विष्टम्भी गुल्मकृत्स्नेही आमः पक्वाम एव च।
सर्वाङ्गगो भवेच्चान्यो वच्ये तस्यापि लक्षणम्॥
विष्टम्भि गुरु चाध्मानं वस्तिशूलश्च जायते।
तस्यापि पाचनं कार्य्यं स्नेहनं चैव कारयेत्॥

इति विष्टम्भ्यामलक्षणम्।

जठरं गर्जते यस्य गुल्मवत् परिपीड्यते।
कटिदेशे जड़त्वञ्च आमगुल्माभिशङ्कितः॥
तस्यादौ लङ्घनानि स्युर्ज्ञात्वा देहवलावलम्।
पाचनं नैव कर्त्तव्यं गुल्मपाके विमूर्च्छति।
पाचिते चापि गुल्मामे तदाशु मरणं ध्रुवम्॥

इति गुल्माम्यामलक्षणम्।

यस्य च स्निग्धता गात्रे जाड्यं मन्दाग्निको वली।
स्नेहामो विज्ञलो यस्य स्नेही वामः प्रकीर्त्तितः॥

तस्य नो स्नेहनं कार्य्यं चोपवासश्च कारयेत् ।
पाचनं चैव कर्त्तव्यमामं चैवातिसारयेत् ॥

इति श्लेष्मामलक्षणम् ।

यस्य शोफाननं जाड्यं तथा चैव घनोदरम् ।
असाध्यामातिसारश्च स चासाध्यो विजानता ॥
प्रताख्येया क्रिया कार्य्या जीवितस्यापि संशये ।
पाचनं पाचितं ज्ञात्वा तस्माच्चूर्णं निदापयेत् ॥

इति आमस्य लक्षणम् ।

सपीतो विजलः श्यामः पक्वामः पतते त्वधः ।
न वस्तिशूलो भवति आमवाते श्रमः क्लमः ॥
आमपाकीति विज्ञेयो न कुर्य्यात् तस्य पाचनम् ।
विरेचनं न कर्त्तव्यं स्तम्भनं तस्य कारयेत् ॥
कटिपृष्ठे वर्चो देशे तोदनं वस्तिशूलवान् ।
गुल्मतो जठरं गर्जेत् तथातः शोफ एव च ॥
शिरो गुरुत्वं भवति आमश्च पतते भृशम् ।
सर्वाङ्गगो भवेत् सोऽपि विज्ञेयोऽसौ विजानता ॥
तस्यैव पाचनं कुर्य्याद्विरेचनमनन्तरम् ।
विष्टम्भो गुल्मपाकी च अन्यः सर्वाङ्गगो मतः ॥
विज्ञेयाश्चात्र ये साध्यासाध्यौ द्वौ कष्टसाध्यकौ ।
स्नेहौ आमस्य कथितः कृच्छ्रसाध्यं द्वयं मतम् ॥
पक्वामः सुखसाध्यस्तु ज्ञात्वा कर्म समाचरेत् ।
रास्ना त्रिकण्टसैरण्डं शतपुष्पा पुनर्नवा ॥
पानं पाचनके शस्तं वामे वाते भिषग्वर ! ।
रास्ना श्योनाककाश्मीरं चिक्कणीकश्च पुष्करम् ॥
क्वाथं शतं सुखोष्णं च पाचनं पाययेन्नरम् ।

एतत् पाचनकं विद्धि प्रोक्तं चामे सवातिके ॥

इति पाचनविधि:।

आमवाते कषायुक्तं दशमूलीजलं पिबेत्।
गुडूची नागरं पथ्या चूर्णमेतद्गुड़ान्वितम् ॥
धान्यनागरराजाह्वदेवदारुवचाभया:।
पाचनं चामवाते च श्रेष्ठमेतत् सुखावहम् ॥
तथा कोलकचूर्णं वा पिबेदुष्णेन वारिणा।
आमवातञ्च मन्दाग्निं शूलं गुल्मञ्च नाशयेत् ॥
पिबेदेरण्डजं तैलं गुडूचीरेण संयुतम्।
सर्वाङ्गे चामवाते हि श्रेष्ठमेतद्विरेचनम् ॥
नागरस्य भागमेकं द्वौ भागौ क्रिमिजस्य तु।
त्रिवृद्भागत्रयं चिप्त्वा चूर्णं गुडसमं वटम् ॥
भक्षेत् तथोष्णतोयेन पुनश्चोष्णं पय: पिबेत्।
एतेन जायते चामे विरेक: सुखकारक: ॥
विड़ङ्गशुण्ठी रास्ना च पथ्या त्रिकटुकान्विता।
क्वाथमष्टावशेषञ्च कारयेद्भिषजां वर: ॥
दुग्धं क्वाथार्द्धकं तैलं तथैवैरण्डजं चिपेत्।
कर्षमात्रञ्च पातव्यो विरेकस्त्वानुपानत: ॥
गुडूचीत्रिफलापथ्या गुड़ेन सह भक्षयेत्।
विरेको ह्यामवातेषु श्रेष्ठमेतत् सुखावहम् ॥

अथ उपशमनानि वक्ष्याम:।

अभया मस्तुना पिष्टा मधुशर्करयान्विता।
आमातिसारं शमयेद् गुड़ामलकमेव च ॥
वल्कलं जीरके द्वे च दध्ना पिष्टन्तु दापयेत्।
आमातिसारशमनं वस्तिशूलं नियच्छति ॥
गुग्गुलुञ्च रसोनञ्च हिङ्गुनागरसंयुतम्।

क्वाथं वामविनाशाय शमनं मारुतस्य च ॥
अजमोदोग्रगन्धा च कुष्ठं त्रिकटुकं शठी ।
फलत्रिकञ्च भार्गी च पुष्करं लवणाष्टकम् ॥
जीरके द्वे विडङ्गानि तुम्बुरु द्वे च दारु च ।
तथा बिल्वा शिलाभेदो रोध्रं वत्सकवासकम् ॥
धातकीकुसुमं चैव शाल्मलीत्वक् च दाड़िमम् ।
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥
घृतेन संयुतं वातं नाशयत्याशु निश्चितम् ।
सहिङ्गु चारनालेन पीतं शूलार्त्तिनाशनम् ॥
तथाचोष्णजलेनापि वामवातं नियच्छति ।
गृध्रसीकटिशूले च दशमूलजलेन तु ॥
विबन्धैरण्डतैलेन शोफे वापि सुदारुणे ।
गुल्मगोमूत्रसंयुक्तं गुड़ेन पाण्डुरोगजित् ॥
प्रमेहे मधुसंयुक्तं यच्चूर्णं शर्करायुतम् ।
हन्ति सर्वामयान् घोरान् यथायोगेन योजितम् ॥
शीतोदकेन न स्नानमामवाते भिषग्वर ! ।
पाचिते चामदोषे च आमवातं न सेवयेत् ॥
न सेवनीयं चोष्णञ्च द्रवद्रव्यं विशेषतः ।
ज्वरे प्रोक्तानि पथ्यानि तानि चात्र प्रयोजयेत् ॥

इति श्रीमहर्षात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने आमवातचिकित्सा नाम द्वाविंशोऽध्यायः ।

---

## त्रयोविंशोऽध्यायः ।

अथ गृध्रसीचिकित्सा ।

आत्रेय उवाच ।

रक्तवातसमुद्भूतान् दोषान् शृणु महामते ! ।
कट्यूरुजानुमध्ये तु जायते बहुवेदना ॥
गृध्रसीति विजानीयात् तेन नोक्तञ्च लक्षणम् ।
जानुमध्ये भवेत् शोफो जायते तीव्रवेदना ॥
वातरक्तसमुद्भूता विज्ञेया क्रोष्टुशीर्षिका ।
कण्डरा बाहुपृष्ठे च अङ्गुल्यभ्यन्तरेषु च ॥
करक्रमक्षयकरी सा विज्ञेया विपश्चिता ।
पादहर्षो भवेच्चात्र पादयोर्लोमहर्षणम् ॥
कफवातप्रकोपान्ते प्रस्वेदः करपादयोः ।
पित्तवातान्वितश्चान्ते उष्णत्वं करपादयोः ॥
अमीषां रुधिरस्रावं ततः स्वेदञ्च कारयेत् ।
अभ्यङ्गे वातहृत् तैलं पानं रास्नादि पञ्चकम् ॥
शतावरी बले द्वे च पिप्पली पुष्कराह्वयम् ।
चूर्णमेरण्डतैलेन गृध्रसीमपकर्षति ॥
अजमोदादिकं चूर्णमामवाते प्रकीर्त्तितम् ।
तदत्र योजनीयञ्च गृध्रसीनां निवारणम् ॥
एतैर्न जायते सौख्यं दहेल्लौहशलाकया ।
पादरोगेषु सर्वेषु गुल्फे द्वे चतुरङ्गुले ॥
तिर्य्यग्दाहं प्रकुर्वीत दृष्ट्वा पादे शिरां दहेत् ।
वातरोगेषु प्रोक्तानि पथ्यानि चात्र योजयेत् ॥

इति श्रीमहर्ष्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने गृध्रसीचिकित्सा नाम त्रयोविंशोऽध्यायः ।

---

## चतुर्विंशोऽध्यायः ।

अथ वातरक्तचिकित्सा ।

आत्रेय उवाच ।

कटुक्षाराम्ललवणैः रक्तं देहे प्रकुप्यति ।
रोधात् सन्धारणाद्वापि दिवास्वप्नादिसेवनैः ॥
समीरकोपः प्रत्यङ्गे युगपद्दृश्यते नृणाम् ।
वातरक्तमिति प्रोक्तं नृणां देहे प्रवर्त्तते ॥
जायते सुकुमाराणां तथा स्त्रीणां भिषग्वर ! ।
स्थूलानाञ्च विशेषेण कुप्यते वातशोणितम् ॥
आलस्यञ्च तथा कण्डुर्मण्डलानाञ्च दर्शनम् ।
वैवर्ण्यं स्फुरणं शोथशोषौ दाहश्च मार्दवम् ॥
वातरक्तं विजानीयात् श्यावता दन्तरक्तयोः ।
एतद्विलक्षणं दृष्ट्वा कर्त्तव्या च प्रतिक्रिया ॥
विरेकं रक्तमोक्षञ्च पानलेपनलेहकान् ।
धान्यनागरसंयुक्तं क्षीरञ्चास्य प्रदापयेत् ॥
पटोलीनिम्बपत्राणि क्वथित्वा मधुसंयुतम् ।
पाचनं वातरक्तानां तथा च शमनानि च ॥
काञ्जिकेन च सम्पिष्य पिचुमर्ददलानि च ।
लेपनं शस्यते तस्य वातरक्तप्रशान्तये ॥
दूर्वा मूर्वा शठी शुण्ठी धान्यकं मधुयष्टिका ।
वर्त्तनं शीततोयेन वातरक्तप्रलेपनम् ॥
धन्याकर्षञ्च जीरे द्वे गुड़ेन परिपाचितम् ।
भक्षणे वातरक्तानां दापयेद्दोषशान्तये ॥
एतैर्यदि न सौख्यं स्यात् तदा रक्तावसेचनम् ।
ज्वरे प्रोक्तानि पथ्यानि तानि चात्र प्रदापयेत् ॥

इति श्रीमदृष्यात्रेय भाषिते हारीतोत्तरे तृतीयस्थाने रक्तवातचिकित्सा नाम चतुर्विंशोऽध्यायः ।

## पञ्चविंशोऽध्यायः ।

अथाम्लपित्तचिकित्सा ।

आत्रेय उवाच ।

गुड़स्य सेवनाच्चाम्ले विरुद्धाहारसूचिते ।
कुपितश्चाम्लपित्तश्च कण्ठस्तेन विदह्यते ॥
दाहो वा हृदये तस्य शिरोऽर्त्तिश्चैव जायते ।
उद्गारानम्लकान् कण्ठे हिक्काम्लोऽपि प्रधावति ॥
शृणु तस्य प्रतीकारं वमनं कारयेद्द्रुतम् ।
अधोगते चाम्लपित्ते विरेकश्च प्रदीयते ॥
पारिभद्रदलानीति आमलक्याः फलानि च ।
क्वाथपानं प्रयोक्तव्यमम्लपित्तं व्यपोहति ॥
पटोलपाटलाक्वाथो धान्यनागरकान्वितः ।
जलेन हितकः प्रोक्तश्चाम्लपित्तनिवारणे ॥
[ट]ोलविश्वामृतवल्लितिक्ता पत्राणि निम्बस्य च वत्सकानाम् ।
[क्वा]थो विसर्पोद्भवमम्लपित्तं विनाशयेन्मण्डलकानि दद्रून् ॥
रात्रौ सम्पाचनं देयं धान्यनागरकल्कितम् ।

इति श्रीमदात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने अम्लपित्तचिकित्सा नाम पञ्चविंशोऽध्यायः ।

---

## षड्विंशोऽध्यायः ।

अथ शोफचिकित्सा ।

आत्रेय उवाच ।

शोफो भवेच्च विकलेन्द्रियरोममार्गः
क्षीणे बले वपुषि चाम्लकटूष्णसेवया ।
शैत्यात् तथा विशदपिच्छलसेवनेन
रूक्षाभिघातपतनेन च धारणाद्वा ॥

आमाशये गतवतोऽपि नरस्य यस्य
अन्ते प्रधावति ततोऽपि च दोष एषः ।
करोति पाणिचरणे च पृथक् प्रसूतो
द्वन्द्वेन वा भवति शोथविकारचारः ॥

नरस्य चान्त्रप्रभवाश्च शोफाः साध्या भवेद्गुर्विनता मुखेषु ।
असाध्यकाः सर्वशरीरगाश्च पादे स्त्रियो वा वदने नरस्य ॥
क्षये च वाते त्वथ गुल्मदेशे स्याद्राजयक्ष्मादिषु चोदरेषु ।
रक्तेन जातोऽप्ययमेव शोफो भवेत्तथा शोफविकारचारः ॥

अन्याश्चोर्द्ध्वगशोफाश्च श्लेष्मपित्तसमुद्भवाः ।
कष्टसाध्याश्च विज्ञेया बह्वुपद्रवसंयुताः ॥
श्लेष्मणि शिरसि प्राप्ते ऊर्द्ध्वं शोफः प्रजायते ।
मध्यः पक्वाशयस्थेऽपि मलमप्यागते त्वधः ॥
रसे सर्वानुगाः शोफाः सर्वदेहानुगा रसाः ।

सर्वाङ्गशोफा अथ मध्यशोफा अर्द्धाङ्गशोफाः परिवर्जनीयाः ।
वृद्धे च बाले क्षतजाः क्षयोत्थाश्छर्दातिसारश्वसनेन युक्ताः ॥
भ्रमज्वरक्षीणशरीरजाता शोफोद्भवा या च भवेन्नरस्य ।
साध्या न वैद्यस्य न चान्यदोषा सा नैव साध्या भिषजां वरिष्ठ ।
तोदश्च रूक्षं श्वसनश्च वातात् पित्ताच्छ्रमः शोफविदाहकश्च ।
शीता घना श्लेष्मणि बाधकण्डूः स्याद् द्वन्द्वजा द्वन्द्वजलक्षणेन
अतो वदामीत्युपचारमस्यां संस्वेदनं पाचनशोधनं वा ।
विरेचनं रक्तविमोक्षणश्च कषायशोथेषु विधिः प्रदिष्टः ॥

न चास्य स्नेहनं कार्य्यं नैव कार्य्यं विरूक्षणम् ।

पुनर्नवा मगधजा च कटुत्रयश्च
निम्बाभया च कटुका च पटोलदार्व्वी ।
क्वाथः सुखोष्णः क्वथितस्तु विपाचनेन
शोफो जहाति जठरश्च नरस्य शीघ्रम् ॥

पुनर्नवा गुडूची च गुग्गुलुं समकल्कितम् ।
शोथदोषांश्च गुल्मश्च हन्त्युदारं कफामयम् ॥
।जमहिष्या वृषभस्य मूत्रं तथैव लाजं सकणं प्रयोज्यम् ।
।नेन शोफो विजहाति शीघ्रमेरण्डतैलेन युतं पयो वा ॥
संस्वेदनक्रिया कार्य्या सा कार्य्या च पुनः पुनः ।
एरण्डपत्रकैर्वापि अथवा तिन्तिड़ीच्छदैः ॥
मयूरः कोकिलाचश्च वाष्पाश्चापि जलेन च ।
लोमशा कटुतुम्बी च काञ्जिकेन जलेन वा ॥
निःक्वाथ्य चापि संस्वेदस्तथैवोष्णेन तेन च ।
पश्चाच्चैवोपनाहश्च यथालाभेन योगतः ॥

इति श्रीमदात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने शोफचिकित्सा नाम षड्विंशोऽध्यायः ।

---

सप्तविंशोऽध्यायः ।

अथ जलोदरचिकित्सा ।

आत्रेय उवाच ।

विषमासनोपवेशात् पीततोयादथापि वा ।
श्रमाध्वश्वासनिष्क्रान्तादतिव्यायामितेऽपि वा ॥
पीतं तूदरमेवञ्च तस्माज्जातं जलोदरम् ।
उदरं सजलं यस्य सघोषमतिवर्द्धितम् ॥
श्वयथुः पादयोः शोथो जलोदरस्य लक्षणम् ।
विरेकं वमनं कुर्य्यात् पाचनानि च कारयेत् ॥
क्षारयोगश्च वटकस्तेन तदुपशाम्यति ।
तस्मान्नाभेर्वलिभागे वर्जयित्वाङ्गुलद्वयम् ॥
जलनाड़ीश्चानुमान्य कुशपत्रेण वेष्टयेत् ।
एरण्डजलनालञ्च तत्र सञ्चारयेद् बुधः ॥
अन्तर्गतं जलं स्राव्यं ततः सन्धारयेद्द्रुतम् ।

यदा न धरते तच्च तदा दाहः प्रशाम्यते ॥
कणाकल्कं परिस्राव्य घृतं देयं चतुर्गुणम् ।
शुण्ठीविषासमं पाच्यं पानमालेपनं हितम् ॥
शस्त्रकर्म भिषक्श्रेष्ठो विज्ञातेनैव कारयेत् ।
दुष्करं शस्त्रकर्मैव न कुर्य्याद् यत्र तद्‌ तु ॥
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ।
तस्मादवश्यं कर्त्तव्यमीश्वरं साधिकारिणा ॥

इति श्रीमहर्ष्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने जलोदरचिकित्सा नाम सप्तविंशोऽध्यायः ।

---

## अष्टाविंशोऽध्यायः ।

अथ प्रमेहचिकित्सा ।

आत्रेय उवाच ।

विंशत्येवं प्रमेहास्तु नराणामिह लक्षणम् ॥
अमादव्यवायाच्च तथैव धर्मविरुद्धतीक्ष्णोष्णविभोजनेन ।
मद्येन वा क्षीरकटुप्रसेवनात् मेहे प्रसूतिः कथिता मुनीन्द्रैः ॥
जलप्रमेहो रुधिरप्रमेहः पूयप्रमेहो लवणप्रमेहः ।
तक्रप्रमेहः खटिकाप्रमेहः शुक्रप्रमेहः कथितः पुरस्तात् ॥
स्याच्छर्करामेहवसाप्रमेहो रसप्रमेहोऽन्यघृतप्रमेहः ।
पित्तप्रमेही कफमेहिनश्च मधुप्रमेहीति विभावयेच्च ॥
यथा च नामानि तथैव लक्षणं वलक्षयं वापि नरस्य देहे ।
कुर्वन्ति शीघ्रं भिषजां वरिष्ठः कुर्य्यात् क्रियां वै शमनाय सद्यः
धवार्जुनश्चन्दनशालशल्लकीक्वाथो हितः स्याच्च जलप्रमेहे ।
रक्तप्रमेहे शिशिरं पयश्च द्राक्षान्वितं यष्टिकचन्दनेन ॥
स्रोसेवनश्चाल्पतरश्च पूयमेहे कषायश्च धवार्जुनस्य ।
दूर्वाकशेरुकदलीनलिन्या शोथश्च मेहे च कषाय उक्तः ॥

कदम्बशालार्जुनदीप्यकानां विडङ्गदार्वीधवशल्लकीनाम्।
एवं तथैते मधुना कषायाः कफप्रमेहेषु निषेवणीयाः॥
लोध्रार्जुनः क्षीरमरिष्टपत्रान् तत्रैव धात्रीफलचन्दनानि।
शुक्रप्रमेहे खटिकाप्रमेहे देयो हितः क्वाथगुडो वटस्य॥
दूर्वा च मूर्वा कुशकाशमूलं दन्ती समङ्गा सह शाल्मली च।
शुक्रप्रमेहे क्वथितं जलेन पानं हितं वा रुधिरप्रमेहे॥
फलत्रिकारग्वधमूलमूर्वाशोभाञ्जनारिष्टदलानि मोचा।
द्राक्षायुतो वा क्वथितः कषायः सर्पिःप्रमेहस्य निवारणाय॥
कुष्ठं तथा पर्पटकस्य तिक्ता सिताप्रगाढः क्वथितः कषायः।
मूर्वारिकापाटलिकानियुक्तो दुरालभाकिंशुककटुरट्कानाम्॥
रसप्रमेहे च सदा हितः स्यात् निषेवते क्वाथमिमं प्रशस्तम्॥

नीलोत्पलार्जुनकलिङ्गधवाम्लिकानां
धात्रीफलानि पिचुमर्ददलानि तोये।
निःक्वाथ्य शर्करयुते मनुजस्य पाने
पित्तप्रमेहशमनाय वदन्ति धीराः॥

विडङ्गसर्जार्जुनकट्फलानां कदम्बरोध्राशनवृक्षकाणाम्।
जलेन क्वाथस्य हितो नराणां कफप्रमेहं विनिहन्ति तेषाम्॥

मुस्ता फलत्रिकनिशा सुरदारु मूर्वा
इन्द्रा च रोध्रसलिलेन कृतः कषायः।
पाने हितः सकलमेहभवे गदे च
मूत्रग्रहेषु सकलेषु वियोजनीयः॥

शिलाभयालोहरजोनिकुम्भचूर्णं हितं शर्करया समेतम्।
फलत्रिकाया मधुना च लेह्यं सर्वप्रमेहेषु हितं वदन्ति॥

मधुमेहे प्रयोक्तव्यं घृतपानं सुधीमता।
क्षीरं वा शर्करायुक्तं क्वाथो वा गुटिकानि च॥
न्यग्रोधोडुम्बराश्वत्थप्लक्षारग्वधटुण्टुकम्।

पियालं ककुभं जम्बूकाकपिच्छाम्रकाणि च ॥
मधुकं यष्टिमधुकं रोध्रं वै पारिभद्रकम् ।
पटोलश्चारिणी चैव दन्ती मेषविषाणिका ॥
चित्रकञ्च करञ्जञ्च शक्राह्वं त्रिफलायुतम् ।
भल्लातकानाञ्च समं त्रिगन्धं कटुकत्रयम् ॥
सूक्ष्मचूर्णं प्रदातव्यं न्यग्रोधाद्यं गुणाधिकम् ।
मधुना संयुतो लेह्यो हन्याच्च मधुमेहकम् ॥
क्वाथो वा तैलपाको वा घृतपाकोऽथवापि च ।
पानाभ्यङ्गे प्रशस्तः स्यात् हन्ति वै मूत्रजं गदम् ॥
न्यग्रोधाद्यमिदं चूर्णं पेयं वा क्षीरसंयुतम् ।
मधुमेहे च नान्योऽस्ति यथालाभेन योजितः ॥
माक्षिकं धातुमाक्षिकं शिलोद्भेदं शिलाजतु ।
चन्दनं रक्तधातुश्च तथा कर्पूरकं कणाः ॥
वंशलोचनकश्चैव क्षीरेण सहितं पिबेत् ।
मधुप्रमेहं हरति मूत्ररोगाद्विमुच्यते ॥
प्रमेहपीड़कानाञ्च वक्ष्यामोऽथ चिकित्सितम् ।
धवार्जुनकदम्बानां वदरी खदिरशिंशपे ॥
पारिभद्रकमेतेषां मेहनस्य प्रधावनम् ।
अर्जुनस्य कदम्बस्य तिन्दुक्या वान्तरत्वचा ॥
पाके पूयविशोधार्थं मेहनस्य प्रशस्यते ।
भृङ्गराजरसं ग्राह्यं तथा च सुरसादलम् ॥
निष्पावकपटोलानां पत्राणि काञ्जिकेन तु ।
पिष्टा वातपीड़कानां लेपनं मेहनस्य च ॥
यष्टीमधु तथा कुष्ठश्चन्दनं रक्तचन्दनम् ।
उशीरं कत्तृणञ्चैव रक्तधातुमृणालकम् ॥
क्षीरमधुकसंयुक्तं यथालाभं भिषग्वर ॥

लेपनं पित्तरक्तानां मेहदाहः प्रशाम्यति ॥
धावनं शीतपयसा नवनीतेन मर्द्दनम्।
कदम्बार्जुनपिण्याकपत्राणि दाड़िमस्य च ॥
खदिरस्य दलांश्चैव तथा चामलकीदलान्।
उष्णेन वारिणा पिष्ट्वा लेपः पाके च मेहने ॥
त्रिफलायाश्च वा चूर्णं शुष्कपूयनिवारणम्।
धावनं काञ्जिकेनाथ तक्रेणाथ तुषाम्बुना ॥
अतिशीतेन तोयेन मेहपाके च धावनम्।
रक्तशालिश्च षष्टीकश्चाढ़की वा कुलत्थकः ॥
घृतञ्च मधुरं किञ्चिद् भोजनार्थे विधीयते।
क्षाराम्लकटुकं वापि दिवास्वप्नं विशेषतः ॥
स्त्रीदर्शनं व्यवायञ्च तथा चात्यशनं गुरु।
चलनं धावनञ्चेति तथा मूत्रविरोधनम् ॥
वस्त्रवातं रक्तवस्त्रं वर्जयेद्भिषजांवरः।
एकान्ते गृहमध्ये च गावस्त्रीबालकं तमः ॥
न चाभरणताम्बूलं कोपमेवं जहाति च।
दूरे चैतानि वर्ज्जन्तु यदीच्छेत् सुखसम्पदः ॥

इति स्फटिकामेहचिकित्सा।

हरिद्रादितयं शुण्ठी विड़ङ्गानि हरीतकी।
कफप्रमेहे विहितः क्वाथोऽयं मधुना सह ॥
नीलोत्पलमुशीरञ्च पथ्यामलकमुस्तकम्।
पिबेत् पित्तप्रमेहार्त्तः क्वाथं मधुविमिश्रितम् ॥
कमलञ्च तथा रोध्रमुशीरमर्ज्जुनान्वितम्।
पित्तप्रमेहे विहितः क्वाथोऽयं मधुना सह ॥
आमलकस्य स्वरसं मधुना च विमिश्रितम्।
हरीतक्याश्च चूर्णं वा सर्वमेहनिवारणम् ॥

खदिरं शर्करा दारु हरिद्रा मुस्तमेव च।
चूर्णितन्तु पिबेत् सर्वप्रमेहगदशान्तये ॥

इति श्रीमदृष्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने प्रमेहचिकित्सा नाम अष्टाविंशोऽध्यायः।

ऊनत्रिंशत्तमोऽध्यायः।

अथ मूत्रकृच्छ्रचिकित्सा।

आत्रेय उवाच।

एलाशिलाजतुयुतं मागधिकापाषाणभेदसंचूर्णम्।
तण्डुलजलेन पीतं प्रमेहरोगं हरत्येव ॥
एरण्डमूलपाषाणभेदगोक्षुरकास्तथा।
एलाटरूषपिप्पल्यो यष्टीमधुसमन्विताः ॥
एषां क्वाथं पिबेज्जन्तुः शिलादित्येन योजितम्।
अश्मरीशर्करायाश्च शर्कराभिः फलत्रयम् ॥
सुशीतलं जलं कर्षमात्रं स्यान्मूत्रकृच्छ्रहृत्।
दध्यम्बुना च संमिश्रमयोचूर्णं सुखप्रदम् ॥
मूत्रकृच्छ्रे यवक्षारचूर्णं हिङ्गुप्रयोजितम्।
कूष्माण्डञ्च समादाय शर्करासहितं पिबेत् ॥
यो हि त्रिदोषसम्भूतमूत्रकृच्छ्रनिवारणः।
पिबेच्छतावरीमूलं शीतपानीयचूर्णितम् ॥
अतः शर्करारोगार्त्तं शर्करां सम्प्रयोजयेत्।
आरग्वधफलं मूलं दुरालभाधान्यकशतावर्य्यः ॥
पाषाणभेदपथ्ये क्वाथोऽयं मूत्रकृच्छ्रे स्यात् ॥
पाषाणभेदस्त्रिवृता च पथ्या दुरालभा गोक्षुरपुष्करं वा।
एला सकुरुण्टककर्कटीजं बीजं कषायः सुमिरुद्धमूत्रे ॥

कुलत्थयुक्तः पटोलीमूलकषायः प्रतिपाकः।
पुष्करमूलमिश्रः प्रमेहपाषाणरोगघ्नः स्यात्॥
यो मातुलुङ्गिकामूलं पिबेत् पर्य्युषिताम्बुना।
तस्यान्तः शर्करोद्भूतं दुःखं सद्यो विलीयते॥
गवां तक्रेण संपिष्टं चिप्रंनामकमौषधम्।
पिबेच्चिरेण तक्रञ्च शर्करादोषदूषितः॥

इति श्रीमदात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने
मूत्रकृच्छ्रचिकित्सा नाम ऊनविंशत्तमोऽध्यायः।

---

## त्रिंशत्तमोऽध्यायः।

अथ मूत्ररोगचिकित्सा।

आत्रेय उवाच।

पिबेत् कर्कटिकाबीजं त्रिफलासैन्धवान्वितम्।
उष्णाम्बुचूर्णितं पीतं मूत्ररोधं शमं नयेत्॥
यस्तिलकाण्डक्षारं दधिमधुसंमिश्रितं पिबेत्।
स नरश्च मूत्ररोधं हत्वा सद्यः सुखमाप्नोति॥
अजाक्षीरेण संमिश्रं जातीमूलं प्रपेषितम्।
पिबेत् सदाहमूत्रोष्णत्ववेदनाशमनं ततः॥
तैलेन पद्मिनीकन्दं पक्वगोमूत्रमिश्रितम्।
पिबेन्मूत्रनिरोधे तु सतीव्रवेदनान्विते॥
पित्तप्रकोपनैर्द्रव्यैः कट्वम्ललवणैस्तथा।
गौरास्त्रीसेवनेनापि रक्तं वापि प्रवर्त्तते॥
मद्यपानेन चोष्णेन श्रमव्यायामपीड़ितैः।
पित्तं प्रकोपयेच्छीघ्रं करोति मूत्रकृच्छ्रकम्॥

तेन मूत्रयते कृच्छ्रं चोष्णधारा प्रवर्त्तते ।
मूत्रस्रोतश्च हरति रक्तञ्चापि प्रवर्त्तते ॥
तस्य वक्ष्यामि भैषज्यं येन सम्पद्यते सुखम् ।
यष्टीमधुकमृद्वीकाचन्दनं रक्तचन्दनम् ॥
रक्ततण्डुलतोयेन मूत्रकृच्छ्रक्षापहम् ।
बन्धप्ररोहमालासु द्राक्षाशर्करयान्वितः ॥
लेहोऽयं मूत्रकृच्छ्रस्य नाशनो भिषजांवर ! ।
देहोपशमनः प्रोक्तः शीतगाहनकोपतः ॥
मूत्रकृच्छ्रे तु तत् प्रोक्तं भोजनं मधुरं हितम् ।
उत्तानस्य रतौ भङ्गात् दाहव्यायामजातके ॥
मूत्ररोधे वचा वथ्या दद्यात् तत्रानिरोधकान् ।
अव्यायामे शुभं भोज्ये शीतावगाहिता नरे ॥
एतैस्तु कुपितो वायुर्मूत्रद्वारं प्रकल्पति ।
श्लेष्मसहितः पापिष्ठ उक्तः कष्टतमो गदः ॥
शृणु तस्य प्रतीकारं कषायं वातुपामनम् ।
वस्तिनिरूहक्वाथश्च मूत्ररोधे हितो विधिः ॥
सर्वसस्वेदनञ्चैव स्नानं वक्रमगाविव ।
तुरङ्गशकटारोहधावनञ्च हितं मतम् ॥
फलत्रिकं समगुडं क्वाथः चीररसेन तु ।
पानं मूत्रनिरोधेषु पित्ताद्दा लवणाम्लिकम् ॥
पाटला च टुण्टुका च निम्बगोक्षुरकं तथा ।
एलात्वक् च तथा पत्रं क्वाथस्त्रिफलयान्वितः ॥
गुडेन संयुतं पीतं हन्ति मूत्रनिरोधकम् ।
दाड़िमाम्लयुतश्चैव हितं मूत्ररुजां नृणाम् ॥
त्रिफलेचुसिताक्वाथगुडेन सह सैन्धवम् ।
मूत्ररोधं वारयति पथ्या वा गुड़संयुता ॥

अथवा तोदनान्नारीमैथुनञ्च विधेयकम्।
तेन सौख्यं भवेच्छीघ्रं स्त्रीणाञ्च योनिमर्दनम्॥

इति श्रीमदृषिवर्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने मूत्ररोधचिकित्सा नाम त्रिंशत्तमोऽध्यायः।

---

## एकत्रिंशत्तमोऽध्यायः।

अथ अश्मरीचिकित्सा।

आत्रेय उवाच।

पितृमातृकदोषेण अथवा मूत्ररोधनात्।
अतिपथ्याद्वाभिचारैर्जायते चाश्मरीगदः॥
मूत्राविष्टौ च पितरौ सुरतं कुरुतो यदि।
मूत्रेण सहितं शुक्रं च्यवते गर्भसम्भवम्॥
पश्च यस्य मदेहस्य स च तत्र प्रजायते।
मूत्रं मूत्रस्य संस्थाने करोति बन्धनं त्रिषु॥
सोऽप्यसाध्यो मूत्रगदश्चाल्याद्भवति मानुषे।
तारुण्ये चापि साध्यश्च जायते मूत्रशर्करा॥
विपरीतेन चोत्तानं स्त्रिया च पुरुषेण वा।
शुक्रञ्च प्रवहेत् तस्य स्त्री शुष्कं विचिनोति च॥
पुनश्च मेहने वासः वातेन शोणितञ्च तत्।
द्वयं दत्तं प्रपद्येत मूत्रद्वारं प्ररुध्यति॥
तेन मूत्रप्ररोधश्च जायते तीव्रवेदना।
अण्डसन्धिस्थिता याति शर्करा शस्त्रसाध्यका॥
अतो वक्ष्यामि भैषज्यं शृणु पुत्र! महामते!।
शुण्ठी गोक्षुरकं चैव वरुणस्य त्वचस्तथा॥
क्वाथो गुड़यवक्षारयुक्तश्चाश्मरिनाशनः।
कुशकाशनलं वेणु अग्निमन्थ्याच्छत्रकम्॥

श्वदंष्ट्रा मोरटा वापि तथा पाषाणभेदकम् ।
पलाशस्त्रिफलाक्काथो गुड़ेन परिमिश्रितः ॥
पाने मूत्राश्मरीं हन्ति शूलवस्तौ व्यपोहति ॥

एलाकणावृषत्रिकण्टकरेणुकाच-
पाषाणभेदमधुकञ्च फलत्रिकञ्च ।
एरण्डतैलकशिलाजतुशर्कराद्यं
क्काथोऽश्मरीञ्च जयते खलु सोष्णपानम् ॥

गोक्षुरकस्य वीजानां धातुमाक्षिकसंयुतम् ।
चूर्णं माहिषदुग्धेन पानं चाश्मरिनाशनम् ॥
शस्त्रविधिरुत्तरीये मूत्रस्थाने प्रोक्तस्तैलं च ।
तैलाध्याये प्रोक्तं घृतं घृताध्याये च स्मृतम् ॥
पुराणषष्टिकाशालिरक्ततण्डुलकास्तथा ।
श्यामाकः कोद्रवो टालो मर्कटी तृणधान्यकम् ॥
कुलत्थयवगोधूमास्तथा चैवाढ़की किल ।
वातघ्नाश्च प्रयोक्तव्या भोजने वातरोगिणाम् ॥
क्रौञ्चाद्यानि च मांसानि पथ्यान्यश्मरिनाशने ॥

इति श्रीमदाव्रेयभाषिते हारीतोत्तरे तृतीयस्थाने
अश्मरीचिकित्सा नाम एकत्रिंशत्तमोऽध्यायः ।

---

## द्वात्रिंशत्तमोऽध्यायः ।

अथ वृषणवृद्धिचिकित्सा ।

आत्रेय उवाच ।

अत ऊर्द्धमण्डवृद्धिर्वक्ष्यते भिषजां वर ! ।
बाल्ये मातुः पितुर्दोषाज्जायते वृषणानुगा ॥
दुष्टदाराविहाराच्च वातो वस्तिगतो भृशम् ।
अण्डस्थानं च संप्राप्य तस्य वृद्धिं करोति वै ॥

एकैकसन्निपाताच्च चतुर्थः सान्निपातिकः।
पित्तदोषात् सन्निपातात् तथासाध्या इमे स्मृताः॥
दोषान् वक्ष्याम्यौषधानि शृणु तानि भिषग्वर!।
स्वेदनाभ्यञ्जनान्युक्ता क्वाथपानं च वक्ष्यते॥
शिरःस्रावो भिषक्श्रेष्ठ! तेषां वक्ष्यामि लक्षणम्।
कम्पश्च मृद्वातेन पित्तेन दाहकज्वरः॥
कफाद्घनश्च शोथश्च कठिनो वृषणो भवेत्।
रसालशल्लकीक्वाथस्तर्कारी कटुतुम्बिका॥
क्वाथसंसेवनार्थां च मुष्कवृद्धिः सवातिके।
शीततोयावगाहो वा शीतसंसेवनं तथा॥
शीतशीताग्निलेपश्च पित्तमुष्के प्रशस्यते।
वचालवणतोयेन कदम्बार्जुनसर्षपैः॥
कषायसेवनैः प्रोक्तं कफमुष्केऽहितापहम्।
कोलञ्च वारुणत्वक् च शालिपर्णी शतावरी॥
क्वाथः शस्तः सन्निपातमुष्कवृद्धौ विदां वर!।
वृत्तादनी च वरुणं दशमूली शतावरी॥
क्वाथपानं वातिके च मुष्कवृद्धौ हिताबहम्।
येन वा लभते सौख्यं तत् तत् कर्म समाचरेत्॥
अण्डकोषस्य मध्ये तु रक्ताश्च धारयेच्छिराम्।
वामकोषस्य वृद्धग्रा तु दक्षिणां धारयेच्छिराम्॥
तयोभाभ्यां शिराभ्याश्च तेन वा न सुखं भवेत्।
इति व्याण्डे क्रिया प्रोक्ता सा चैवोक्तोतरोगिणे॥
दृष्ट्वा च नितराङ्गश्च कुर्य्यात् स्त्रीसेवनं भृशम्।
तेन भङ्गो भवेत् तस्मादुपचारः सुखावहः॥

इति श्रीमदृर्य्यात्रियभाषिते हारीतोत्तरे तृतीयस्थाने वृषणवृद्धिचिकित्सा नाम द्वात्रिंशत्तमोऽध्यायः।

## त्रयस्त्रिंशत्तमोऽध्यायः।

### अथ विसर्पचिकित्सा।

आत्रेय उवाच।

लवणक्षारकटुकैरुष्णस्वेदातिदोषतः।
रक्तपित्तं प्रकुप्येत स विसर्पो भिषग्वर!॥
स चाष्टधा परिज्ञेयः पृथग्दोषैश्च द्वन्द्वजैः।
केवलो रक्तजस्त्वन्यः सन्निपातेन चाष्टमः॥
तथापरे प्रवक्ष्यन्ते नामानिच पृथक् पृथक्।
आग्नेयो ग्रन्थिको घोरः कर्दमश्च तथापरः॥
आग्नेयो वातपित्तेन ग्रन्थिकः पित्तश्लेष्मणा।
कर्दमो वातश्लेष्मोत्थो घोरः स्यात् सान्निपातिकः॥
वातज्वरसमो वातसमः पित्तज्वरोपमः।
श्लेष्मणा शीतलघनः सन्निपातसमस्तथा॥
न्यग्रोधविल्वखदिरकषायो धावने हितः।
काञ्जिकाम्लैः पिच्छिलया सौवीरकरसेन वा॥
मातुलुङ्गरसेनापि धावनं वातसर्पिषु।
क्षीरेण शीततोयेन धावनं पित्तसर्पिणि॥
श्लेष्मविसर्पिणे वाथ धवार्जुनकदम्बकम्।
धावनं सर्पिणे शस्तं सुरासौवीरकेण वा॥
धावनञ्च हितं तस्य सन्निपाते विसर्पिणे।
यवाग्निमन्थैश्च शठीन्यग्रोधैश्च समर्षपैः॥
क्वाथः स्यात् सान्निपातोत्थविसर्पधावने हितः।
पञ्चजीरकपित्थांश्च काञ्जिकेन तु पेषयेत्॥
मातुलुङ्गरसेनापि लेपनं वातसर्पिणे।
धवा रोध्रतिलाश्चैव विदारी कण्टकं तथा॥
लेपः पित्तविसर्पे वा गुञ्जापत्रैस्तु लेपनम्।

सैन्धवारिष्टतुम्बीकापटोलपत्रकैर्घृतम् ॥
पाचितं लेपने शस्तं विसर्पाणां निवारणम् ।
रक्तजेषु विसर्पेषु कुर्य्याद्रक्तावसेचनम् ॥
पद्माम्रवकदम्बानां सर्वदा गृहधूमकम् ।
लेपने हितकृत् प्रोक्तं धावनं काञ्जिकेन तु ॥
कुठेरकाश्च सुरसा चक्रमर्द्दो निशायुगम् ।
सर्षपाः काञ्जिकेनापि पिष्टा च लेपनं हितम् ॥

इति श्रीमदात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने विसर्पचिकित्सा नाम त्रयस्त्रिंशत्तमोऽध्यायः ।

---

## चतुस्त्रिंशत्तमोऽध्यायः ।

अथ उपसर्गचिकित्सा ।

आत्रेय उवाच ।

चतुर्विधो भवेद्दोषो वातरक्तसमुद्भवः ।
गन्धदोषेण जायन्ते नामान्येषां पृथक् पृथक् ॥
क्षुद्रतश्चान्तको घोरः अथवान्या मसूरिका ।
वसन्तः सर्षपाकारा पीड़का यस्य दृश्यते ॥
सोऽपि क्षुद्रतरः प्रोक्तः पित्तरक्तप्रदोषतः ।
अग्निदाह इवासह्या पीड़का यस्य दृश्यते ॥
सोऽप्यतीव विसर्पी स्यादसुखी च निरन्तरम् ।
सघनाः पीड़का यस्य पाकमेति समः कफः ॥
दाहोऽर्त्तिर्विवर्णत्वं तस्य सद्यः प्रजायते ।
वर्त्तुला मसूरिकावत् पीड़का यस्य दृश्यते ॥
शाम्यति शीघ्रपाकेन सा विज्ञेया मसूरिका ।
तस्य वक्ष्यामि भैषज्यं यथाविधि महामते ! ॥
गुणाकारं सुरक्षेच्च रक्षायोगविधानतः ।

न स्त्रीणां नाधमानाञ्च संसर्गं वा प्रसङ्गकम् ॥
सुशीतं शीतलं स्थानं कारयेत् सुप्रयत्नतः ।
क्षुद्रकस्योपसर्गस्य लेपनं चात्र कारयेत् ॥
कुष्ठं सोशीरन्यग्रोधस्तथोदुम्बरिकात्वचः ।
प्रलेपनं प्रशस्तं स्यात् क्षुद्रोपसर्गवारणः ॥
शर्कराक्षीरमधुभिर्युक्तं पानं सुखावहम् ।
जम्ब्वाम्रपल्लवानाञ्च पिष्टं दधि मधुयुतम् ॥
पाययेत् क्षुद्रकस्यास्य अतिसाराग्निनाशनम् ।
गोक्षुरकश्चातिविषा कर्कटाद्यं सपर्पटम् ॥
कल्कमेतत् प्रयोक्तव्यं मधुशर्करसंयुतम् ।
हरीतकीमातुलुङ्गस्वरसं शर्करायुतम् ॥
क्षुद्रकस्योपसर्गस्य वमिशोषनिवारणम् ।
अग्निकेऽप्युपसर्गे च योज्यं चैतत् प्रलेपनम् ॥
रक्तचन्दनमञ्जिष्ठानिम्बपत्राणि चार्जुनम् ।
क्षीरेण नवनीतेन हितं स्याल्लेपनं तथा ॥

इति आग्निक. ।

घोरं चोपद्रवं दृष्ट्वा न स्वेदं न च मर्दनम् ।
न प्रलेपं प्रकुर्वन्ति यथायोगेन पण्डिताः ॥
अरण्यगोमयक्षारतैलेन चालनं हितम् ।
न तैलेनापि चाभ्यङ्गं लेपं नैव च कारयेत् ॥
चन्दनं मधुकं रोध्रं न्यग्रोधोत्पलसारिवा ।
मधुना संयुतः कल्कः पानेन चोपसर्गहृत् ॥
उपसर्गे ज्वरस्तीव्रो रक्तमूत्रं प्रजायते ।
तस्य वक्ष्याम्युपाचारं येन संपद्यते सुखम् ॥
पटोलं पर्पटं शुण्ठी मुस्ता च खदिरं समम् ।
कल्को मधुयुतः पाने हितः स्याज्ज्वरनाशनः ॥

चन्दनोशीरमञ्जिष्ठापुष्करं दन्तधावनम्।
क्वाथपानं मधुयुतमुपसर्गज्वरापहम्॥
वमने चातिसारे च दाडिमं कुटजं तथा।
मधुदध्यान्वितं पानमतिसारनिवारणम्॥
शेषाश्च क्षुद्रिकाः प्रोक्ताः क्रिया चात्र विधेयका।
एषा क्रिया मसूरिके कर्त्तव्या सुविधानतः॥
वातलानि च सर्वाणि तथा रूक्षाणि कोविदः।
स्त्रीसङ्गं रूक्षशोकञ्च दूरतः परिवर्जयेत्॥
ज्वरे प्रोक्तानि पथ्यानि तानि चात्र प्रदापयेत्।
एवं त्रिसप्तरात्रेण सुखं सम्पद्यते नरः॥
ततोऽभिषेकः कर्त्तव्यः कृत्वा मङ्गलवाचनम्।
नूतनानि च सूक्ष्माणि वस्त्राणि च सितानि च।
परिधाय होमकार्य्यमिष्टभोज्यं विधेयकम्॥

इति श्रीमदात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने उपसर्गचिकित्सा नाम चतुस्त्रिंशत्तमोऽध्यायः।

---

## पञ्चत्रिंशत्तमोऽध्यायः।

अथ व्रणचिकित्सा।

आत्रेय उवाच।

अथातः संप्रवक्ष्यामि व्रणानां तु चिकित्सितम्।
व्रणास्त्वनेकधाः प्रोक्ता नानाधातुविकारिणः॥
ष्टाम्बुपानाशनसेवनाच्च क्रोधातिभाराद् व्यसनेन वापि।
ञ्जायते दुष्टव्रणोऽपि घोरस्त्वान्येन रक्तस्य हि दूषणेन॥
ातेन पित्तेन कफेन वापि द्वन्द्वेन वा दोषसमुच्चयेन।
ांसं प्रकुप्य रुधिरं विकोर्य्य सञ्जायते दुष्टव्रणोऽपि घोरः।

अन्येन रक्तस्य हि दूषणेन वातेन पित्तेन कफेन वापि ॥
त्वग्रक्तानि समेदांसि प्रदूष्यास्थिसमाश्रिताः ।
दोषाः शोफं शनैर्घोरं जनयन्त्युद्धता भृशम् ॥
सरक्तश्च सशूलश्च रुजावश्च सवेपथु ।
रूक्षं वा वातसम्भूतं विज्ञेयं सरुजं व्रणम् ॥
स तु दाहज्वरः स्पृष्टःस्पर्शनं सहते तु यः ।
शीतः सौख्य लघुपाकी पित्तात् सञ्जायते व्रणः ॥
कठिनो वर्त्तुलाकारो घोरः शीतः सकण्डुकः ।
उष्णसहः स्निग्धतरश्चिरपाकी कफव्रणः ॥
सर्वैर्लिङ्गैर्विजानीयात् सन्निपातसमुद्भवम् ।
द्वन्द्वजैर्द्वयदोषस्तु दोषे चापि प्रदृश्यते ॥
अभिघातसमुद्भूता विज्ञेयास्ते चतुर्विधाः ।
अन्ये नाड़ीव्रणा ये स्युः सवाताश्च सवेदनाः ॥
अन्ये तु स्रोतसां मध्ये तेषां शृणु चिकित्सितम् ।
प्रथमं मण्डविस्रावो द्वितीयं स्वेदनं स्मृतम् ॥
तृतीयं पाचनं प्रोक्तं पाचिते पाटनं तथा ।
शोधनञ्च प्रयोक्तव्यं तथा रोहणमेव च ॥
पश्चात् क्रमस्तथैव स्याद् व्रणानां हितकारकः ।
रास्ना वचा तथा शुण्ठी मातुलुङ्गरसस्तथा ॥
काञ्जिकेन सममेकधावनं वातिके व्रणे ।
यष्टीमधुकमञ्जिष्ठापटोलनिम्बपत्रकैः ॥
दुग्धेन क्वथितं शीतं धावनं पैत्तिके व्रणे ।
त्रिफला च कदम्बश्च तथा जम्बुकपित्थकम् ॥
क्वाथः सोष्णकफोद्भूते व्रणे धावनमुत्तमम् ।
मातुलुङ्गाग्निमन्थौ च मूलं वा काञ्जिकेन च ॥
सुरदारु तथा शुण्ठी लेपो वातव्रणे हितः ।

नलमूर्वा च मधुकं चन्दनं रक्तचन्दनम् ॥
पिष्टं तण्डुलतोयेन पित्तव्रणविनाशनम्।
अङ्कोलकञ्च रोध्रञ्च कदम्बार्जुनवेतसाः ॥
पारिभद्रदलञ्चैव पिष्ट्वा व्रणविलेपनम्।
पाकं गते व्रणे वापि गम्भीरे सरुजेऽथवा ॥
सरन्ध्रे शोधनं कार्य्यं धावनन्तु भिषग्वरैः।
करञ्जधवनिम्बानां कदम्बार्जुनवेतसैः ॥
पादावशेषे क्वाथेन गम्भीरव्रणधावनम्।
मञ्जिष्ठा च तथा लाक्षारसश्चैव मनःशिला ॥
निशायुगसमायुक्तं पिष्ट्वा वस्त्रपरिस्रुतम्।
मधुयुक्तं शोधनञ्च व्रणानां हितकारकम् ॥
निम्बपत्राणि सङ्क्षिप्य मधुना व्रणशोधनम्।
निम्बपत्रतिलक्षौद्रं दार्वीमधुकसंयुतम् ॥
तथा तिलानां कल्कञ्च शोधनञ्च व्रणेषु च।
तिलञ्च पीतनिम्बस्य पत्राणि सुनिपक्वकम् ॥
कषायश्च हितश्चैव व्रणानां शोधनेषु च।
विशुद्धञ्च व्रणं ज्ञात्वा स्रक्षयेच्च व्रणञ्च तत्।
नवनीतेन वा श्रेष्ठं तेन सद्योहतो व्रणः ॥

जातीकरञ्जपिचुमर्दपटोलपत्रं
यष्टीमधुश्च रजनी कटुरोहिणी च।
मञ्जिष्ठकोत्पलमुशीरकरञ्जबीजं
स्यात् सारिवा त्रिवृन्मागधिका समांशा ॥
पक्वं घृतं वै हितमेव व्रणे प्रशस्तं
नाड़ीगते च सरुजे च सशोणिते च।
लूताविसर्पमपि हन्ति गभीरमेव
व्रणाः सदाहकठिना अपि यान्ति नाशम् ॥

इति व्रणक्रिया प्रोक्ता समासेन भिषग्वर ! ।
यथायोगञ्चोपचारं ज्ञात्वा सम्यगुपाचरेत् ॥

इति जात्यादिघृतम्

इति श्रीमहर्षिविरचिते हारीतोत्तरे तृतीयस्थाने व्रणचिकित्सा नाम पञ्चविंशत्तमोऽध्यायः ।

---

## षड्त्रिंशत्तमोऽध्यायः ।

अथ श्लीपदार्बुदचिकित्सा ।

आत्रेय उवाच ।

व्रणोक्तैरुपचारैश्च जायते श्लीपदं तथा ।
वातेन स्फुटितं रूक्षं श्याममञ्चापि प्रदृश्यते ॥
पित्तेन सदाहपाकं सज्वरञ्चैव दृश्यते ।
श्लेष्मणा जायते स्निग्धं घनं शोफसमन्वितम् ॥
सन्निपातेन सर्वाणि जायन्ते भिषजां वर ! ।
मेदाश्रितन्तु वाल्मीकं वल्मीकवत् प्रदृश्यते ॥
सदृशानि च चिह्नानि वातिकोत्थानि लक्षयेत् ।
तस्य क्रिया व्रणोक्ताश्च कारयेद्विधिपूर्विकाः ॥
जात्यादि च घृतं शस्तं तथैवालेपनानि च ।
पुनः प्रलेपनं कार्य्यं धवार्जुनकदम्बकैः ॥
गिरिकर्णिकामूलञ्च तथा वृक्षादनीमपि ।
पिष्ट्वा प्रलेपनं कार्य्यं वाल्मीकश्लीपदस्य च ॥
पिष्ट्वा शूरणकन्दञ्च मधुना च घृतेन च ।
लेपनञ्च हितं तस्य वल्मीकश्लीपदापहम् ॥
वेगाभिवातपवनाद् व्रणाद्वापि तथा पुनः ।
रक्तनाड्यः प्ररोहन्ति शुध्यन्ति च तथा पुनः ॥
तेन रक्तस्य मार्गस्तु रुध्यते तेन जायते ।

अर्वुदञ्च महास्थूलं मार्गरोधाच्च जायते ॥
वातान्मृदु च परुषं कफाच्च घनशीतलम् ।
पित्तेन दाहपाकाढ्यं विजानीयात् विचक्षणैः ॥
सन्निपातेन कठिनं घनं पाषाणसन्निभम् ।
कृमिमच्च गुडकं स्यादसाध्यं तद्भिषग्वर ! ॥
तस्यादौ पाटनं कार्य्यं मर्मस्थानञ्च वर्जयेत् ।
सैन्धवेन घृतेनापि कुर्य्यात् तस्यानुलेपनम् ॥
शूरणं कन्दकं दग्ध्वा घृतेन च गुडेन च ।
लेपनञ्चार्वुदानाञ्च नाशनञ्च भिषग्वर ! ॥
शेषा व्रणक्रिया प्रोक्ता शस्ता वार्वुदशान्तये ।
वातघ्नानि च पथ्यानि हितानि मधुराणि च ॥

इति श्रीमदात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने श्लीपदार्वुदचिकित्सा नाम षट्त्रिंशत्तमोऽध्यायः ।

---

## सप्तत्रिंशत्तमोऽध्यायः ।

### अथ लूतागण्डमालाचिकित्सा ।

आत्रेय उवाच ।

दुष्टाम्बुपानाच्च कदन्ननिषेवणाच्च
सञ्जायते च क्रिमिसम्भवगण्डमाला ।
समारुते च कफपित्तभवे विकारे
संसर्पते क्रिमिजदोषगणश्च गण्डात् ॥
वातेन वातसदृशानि च लक्षणानि
पित्तेन दाहसरुजव्रणशोषतापाः ।
संश्लेष्मणा च शीतलघना सम्प्रयोगात्
स्यात् सन्निपातविहिता च समस्तलिङ्गैः ॥

तस्य चेमं प्रतीकारं वक्ष्यामि शृणु पुत्रक ! ।

रोहिणी विशदा चैव विजया च विभेदिनी ॥
कान्तारी वज्रपुष्पा च तथा चेन्द्रायुधापरा ।
इति सप्तविधा लूताः शृणु पश्चात् पृथक् पृथक् ॥
रक्तमुण्डा भवेद्रक्ता रक्तस्थाने च रोहिणी ।
विशदा मांसलस्थाने श्वेतवर्णा च दीर्घिका ॥
विजया च शिरोमध्ये पीतवर्णा यवप्रभा ।
भेदिनी मेदसंस्थाने श्वेता च नीलरेखिका ॥
कान्तारी च वस्तिमध्ये श्वेताङ्गा रक्तमुण्डिका ।
वज्रपुष्पा चास्थिमध्ये श्वेता कृष्णा शिरा मता ॥
वज्रायुधा शिरान्ते च धूम्रा कृष्णा शिरा मता ।
रोहिण्यङ्गुलिमात्रेण सूत्रेण विशदा समा ॥
विजया च यवाकारा वर्तुला विजया तथा ।
अन्या तृणाश्च विज्ञेया तण्डुलीकण्टकाभिभा ॥
रोहिणी विजया विंशा मांसस्थानसमाश्रिता ।
गुल्फे वा चास्थिसन्धौ च दृश्यते भेदिनी नरे ॥
कुक्षौ कर्णान्तरेऽपाङ्गे कान्तारी विद्धि पृथक् ॥
वज्रपुष्पा शिरसि च शिरान्तास्त्रिपदा मता ॥
अतो वक्ष्यामि भेषज्यं शृणु पुत्र ! प्रयत्नतः ।
सान्द्रपूयविस्रावश्च गम्भीरश्च व्रणं विदुः ॥
अन्यच्च सरुजश्चैव पक्वजम्बूसमप्रभम् ।
लूताव्रणानाश्चैतानि अपक्वानि च दृश्यते ॥
त्यक्त्वा सन्धिस्थमर्मस्थां लूताश्चैव हि तद्व्रणम् ।
तदा तप्तेन तैलेन दाहश्चाशु विधीयते ॥
अङ्कोलस्यैव मद्यानि पारिभद्रदलानि च ।
गृहधूमं कृष्णजीरं गोमूत्रेण तु पेषितम् ॥
लेपनं हि प्रशस्तश्च लूतानां मारणे परम् ।

पिण्डीतकं विड़ङ्गानि तथा चेङ्गुदिमूलकम्॥
वीजपूरकमूलानि पेषितानि विलेपयेत्।
गण्डमालां तथा घोरां हन्ति शीघ्रं प्रकण्टकाम्॥
स्नुहीक्षीरं चार्कक्षीरं लूतारन्ध्रे नियोजयेत्।
तेन कीटस्तु तन्मध्ये म्रियते नात्र संशयः॥
आस्थतो गिरिकर्णीञ्च चन्दनञ्च समांशकम्।
पिष्ट्वा लेपः प्रयोक्तव्यो लूतां हन्ति सुदारुणाम्॥
करवीरं चार्कदुग्धं तथा च कटुतुम्बिकाम्।
निशाद्वयं जाङ्गलिकां तिलतैले विपाचयेत्॥
लूतामभ्यञ्जनैर्हन्ति गण्डमालाञ्च दारुणाम्।
घृतं जात्यादिकं नाम तथा चात्र प्रयोजयेत्।
अन्यान्यपि व्रणे यानि प्रोक्तानि च यथाविधि॥

इति श्रीमहर्षिणा आत्रेयभाषिते हारीतोत्तरे तृतीयस्थाने लूतागण्डमालाचिकित्सा नाम सप्तत्रिंशत्तमोऽध्यायः।

---

## अष्टात्रिंशत्तमोऽध्यायः।

आत्रेय उवाच।

विरुद्धपानानि गुरूणि चाम्लपापोदकं सेवनकेन वापि।
निद्रा दिवासु प्रतिजागराच्च पित्तं प्रकुप्येत् रुधिराश्रितं तत्॥
त्वचागतः सर्पति रोगदोषः कुष्ठेति संज्ञा प्रवदन्ति धीराः।
पापोद्भवास्ते प्रभवन्ति देहे नृणां भृशं कोपयतां विधिज्ञ!॥
कुष्ठानि चाष्टादशधा वदन्ति तेषां पृथक्त्वेन वदामि लक्षणम्।
असाध्यसाध्यानि च कर्मजानि दोषोद्भवानि सहजानि तानि॥
कारुण्यपारुष्यमथैव कण्डूरोमप्रहर्षस्तिमितं तथैषाम्।
तोदस्तथा संव्यथनञ्च देहे स्निग्धे स्थिते कुष्ठभवेति चिह्नम्॥
कपालकं चैवमुदुम्बरञ्च तथैव दद्रूणि च मण्डलानि।

विसर्पकं हन्ति वलिं किणञ्च गोजिह्वकं लोहितमण्डलं वा ॥
वैपादिकं चर्मदलं तथान्यं विस्फोटकान्यत्र बहुव्रणञ्च ।
कण्डूर्विचर्ची कथितं तथान्यद् धातुप्रभेदास्त्वचि रोगसिद्धाः ॥
कपालकाभं सितवर्णकञ्च कापालिकं तद्वदितं विधिज्ञैः ।
स्निग्धञ्च सर्वाङ्गगतञ्च कण्डू मृदुस्वरं तं प्रवदन्ति सन्तः ॥
दद्रूपमं यद्भवते च दद्रुर्दद्रूपमं मण्डलकं तमाहुः ।
विसर्पकं सर्पति तद्विसर्पं नृणां तथा स्यात् गजचर्मतुल्यम् ॥
यद्दूष्यपारुष्यसकर्कशञ्च गोजिह्वकं स्यात् खलु भेदयोग्यम् ।
यथा सरक्तानि च मण्डलानि सकण्डुकानि व्रणसंयुतानि ॥
ज्ञेयं तु तल्लोहितमण्डलञ्च रक्तोद्भवं तद्रुधिराश्रितञ्च ।
सवेदनार्त्तस्य परिस्फुटञ्च विपादिका सा कथिता विधेया ॥
सरक्तवातात् कुपितात् प्रजाता तथैव विस्फोटकसन्निभा वा ।
तथापरं नाम बहुव्रणञ्च सूक्ष्मा च सा वै विदिता नरस्य ॥
कण्डूर्विचर्ची भुवने प्रतीता श्वेतानि सूक्ष्माणि च पाटलानि
विसर्पते यस्य नरस्य रक्तं युवा न केनापि भवेच्च सिद्धः ॥
शिरीषपुष्पाणि शिरीषकाणि सन्त्यक्तभावः परुषश्च सूक्ष्मः ।
तोदस्तथा वेपथुवातलिङ्गं पित्तेन शोषभ्रमदाहलक्षणाः ॥

श्लेष्मोद्भवे कठिनशीतलपाण्डुरञ्च
नेत्रे नखेषु च वपुष्यभिलाषिता च ।
मिश्रेण संश्रितभवानि भवन्ति यस्य
स्यात् सान्निपातिकभवं बहुधा च लिङ्गैः ॥

रूक्षं तथा सकण्डूत्वक्स्थितञ्च मृदु शीतलम् ।
आस्रावदाहरक्ताभं रक्तस्थं रक्तगं विदुः ॥
सुस्निग्धं तोदगम्भीरं मांसगञ्च विनिर्दिशेत् ।
मेदःस्थतोदवेष्टत्वं सुस्निग्धं रक्तलोचनम् ॥
अस्थिसंस्थञ्च गम्भीरं विसर्पं नासिकामुखे ।

मज्जसंस्थश्च विकलो मज्जास्रावश्च जायते ॥
विशीर्य्यते च सर्वाङ्गे तथैव शुक्रगं विदुः।
अतो वक्ष्ये समासेन प्रतिकर्म भिषग्वर। ॥
त्वक्स्थे स्वेदश्चावलेपो रक्तस्रावश्च रक्तगे।
रेचनं मांसगे प्रोक्तं मेदोगे क्वाथपाचनम् ॥
अथ तानि च त्रीण्येवमस्थिमज्जगतानि च।
वातिके स्वेदनं पथ्यं पित्ते शीतोपचारणम् ॥
कष्टसाध्यमिदं प्रोक्तमसाध्यं सान्निपातिकम्।
रोगकारणमालोच्य तदा कर्म समारभेत् ॥
पचान् पचान् शोधनं पाचनञ्च मासान्मासान् कारयेद्रेचनञ्च।
मासान् कुष्ठे शोधनाय प्रकर्षात् षष्ठे षष्ठे मास्यसृग्मोचणञ्च ॥

वासापटोलफलिनीलवणं वचाञ्च
निम्बत्वचं क्वथितमाशु पिबेत् कषायम्।
कुष्ठे करोति वमनं मदनान्विते च
कषाय पञ्च वमने मदनान्वितेषु ॥

फलत्रिकं त्रिवृद्दन्ती विरेकोऽपि भिषग्वर!।
क्वाथो वचोष्णतोयेन पाने स्याद्भिषगुत्तम! ॥
श्वासप्रश्वासयोर्विध्या शिरा शिरसि चेद्दहिः।
ततः प्रयोजनीयश्च क्वाथस्नेहस्य भोजनम् ॥

शुण्ठीकणाखदिरपाटलिकापटोली-
मञ्जिष्ठिकेक्षुविषविल्वयवानिकानाम्।
• व सा फलत्रिकजलेन कषायसिद्धः
पानान्निहन्ति मनुजस्य च कुष्ठदोषम् ॥
वासाविडङ्गपिचुमर्दपटोलपाठा-
शुण्ठीसुरेन्द्रतरुपद्मजतुमूलपथ्याः।
क्वाथो निहन्ति मरुत्प्रभवञ्च कुष्ठं

त्रिःसप्तकेऽहनि महौषधमेव योज्यम् ॥
नित्यं छिन्नोद्भवाचूर्णं तस्य क्वाथसमन्वितम् ।
पीतं जीर्णे घृतेनैव पीतञ्च षाष्टिकं पयः ।
हन्ति कुष्ठानि सर्वाणि सप्तधातुगतानि च ॥

अथ लेपनानि ।

काश्मर्य्यदरदं घनञ्च कुष्ठं निशाद्वयं काञ्जिककुष्ठमेतत् ।
लेपे प्रशस्तं विनिहन्ति कुष्ठं विचर्चिकाञ्चैव विसर्पदोषम् ।
पिष्टानि तत्र मधुकाञ्जिकमूत्रपिष्ट-
लेपेन कुष्ठमपि दुष्टविचर्चिकाञ्च ।
विसर्पदोषे प्रोक्तानि धावनानि च कारयेत् ।
सौवीरकरसेनापि धावनं त्रिफलाम्बुना ॥
वातिके चैव कुष्ठे च प्रशस्तं कथितं बुधैः ।
निम्बपत्रकषाये च यष्टीमधुककल्कितम् ॥
दुग्धेन शीतलेनापि विदार्य्याः क्वाथकेन वा ।
हन्ति कुष्ठं महाघोरं धावनं न प्रशस्यते ॥
अग्निमन्थपटोलानि मातुलुङ्गदलानि च ।
शठीपर्पटकक्वाथो धावनं श्लेष्मरोगिणाम् ॥
विपादिकां चालयित्वा नवनीतेन यत्नतः ।
स्वेदयित्वार्कदुग्धैश्च मधुतैलेन लेपनम् ॥
खदिरनिम्बककदम्बकं तथा ककुभः पाटलिका च शिरीषकम् ।
कुटजकिंशुकवासासमोरटः वटकुटन्नटपिप्पलिपीलुकम् ॥
धवमुदुम्बरवेतसमेकतः क्वथितपानविधानघृतेन तु ।
सकलकुष्ठविनाशनकारकं भवति चेन्दुसमानवपुर्नरः ॥
आरग्वधधातकीकर्णिकारधवार्जुनैः सर्जककिंशुकानाम् ।
कदम्बनिम्बकुटजाटरूषाः खदिरेण युक्तास्तथैव मूर्वा ॥
मूलानि चैषामुपहृत्य सम्यगष्टावशेषे क्वथितः कषायः ।

घृतेन तुल्यं प्रतिमानमस्य निहन्ति सर्वाणि शरीरजानि ।
कुष्ठानि सर्वाणि विसर्पदद्रुविचर्चिका हन्ति नरस्य शीघ्रम् ॥

इति आरग्वधादिक्वाथः ।

खदिरकदरमूर्वाबालकं कर्णिकारः
कुटजसप्तभिद्रारग्वधाश्चापि पिष्टाः ।
क्वथितमितसमांशं वै घृतं पानमस्य
विनिहन्ति सकलान् वै कुष्ठवैसर्पदर्पान् ॥

भल्लातकत्र्यूषणमत्तचूर्णं कुष्ठञ्च गुञ्जालवणानि पञ्च ।
फलत्रिकं तैलविपाचितानि चाभ्यञ्जनं हन्ति च दद्रुकुष्ठम् ॥

इति भल्लातकाद्यं तैलम् ।

अश्वत्थमूलं मलिनं समङ्गा निशाद्वयं सर्षपचित्रकञ्च ।
भृङ्गराजं कटुतुम्बिका च कुष्ठं विडङ्गं मगधा च चूर्णम् ॥
स्नुह्यर्कदुग्धेन विपाचितं तु तैलं तिलानां परिपक्वमेतत् ।
अभ्यञ्जनं चैव नरस्य नूनं दद्रूणि कण्डूनि विनाशयेच्च ॥

इति तिक्ततैलम् ।

हरिद्रा समङ्गा सुराष्ट्रं सचित्रं
विडङ्गानि कृष्णा विशालाम्बुकुष्ठम् ।
तथा लाङ्गली चक्रमर्दं च गुञ्जा
विशाला तथारिष्टपत्राणि चैतत् ॥
कृतं भावितं चूर्णितं वा गुडेन
विपाच्यश्च घर्मे विधेयं नरेण ।
हितं लेपने कुष्ठपामाविचर्ची
नरस्यातिशीघ्रं निहन्ति व्रणञ्च ॥

इति हरिद्राद्यं तैलम् ।

निम्बं पटोलञ्च किरातकञ्च जाती विशाला सपुनर्नवा च ।
गोदलाचारसमेव वासा त्रायन्तिका बिल्वककुष्ठयष्टिः ॥

संचूर्णितं क्षीरदध्ना समेतं घृतं विपक्वं परिषेचने च।
हितञ्च कुष्ठक्षतदद्रुरक्तं पामाविचर्चीर्विनिहन्ति कण्डूम्॥

इति निम्बाद्यं घृतम्।

अथ पाण्डुरकुष्ठचिकित्सा।

पित्तञ्चैव गदं भूत्वा वातेनैव समीरितम्।
सरक्तञ्च प्रकुपितं कुरुते पाण्डुरच्छविम्॥
स्तब्धचित्तं विरूपञ्च शृणु तस्य च लक्षणम्।
असाध्यं वापि साध्यं वा विज्ञेयं तद्भिषग्वरैः॥
ईषद्रक्तं भवेत् पाण्डुः सन्निपातात् प्रजायते।
असाध्यं तच्च सर्वाङ्गचित्रं स्निग्धं तदेव तु॥
पीतच्छविं पाण्डुररूक्षमेव उपागतं साध्यतमं प्रतीतम्।
संपाचनं शोधनमेव शस्तं विरेचनं रक्तविमोचणञ्च॥
वासागुडूचीत्रिफलाकरञ्जपटोलनिम्बार्जुनवेतसानाम्।
कृष्णासमङ्गासहितञ्च कल्कं पाने हितं चित्रकमण्डले च॥
खदिरवासकनिम्बपटोलकैर्धवयवासकमेव फलत्रिकैः।
सकलकुष्ठविसर्पकमण्डलं विजयते मनुजस्य च पाण्डुरम्॥
पाठाविडङ्गमगधासुरदारुचित्रं
दद्रुघ्न रात्रियुगलं च तथा समङ्गा।
कुष्ठं वचामधुकसैन्धवकाञ्जिकेन
पिष्टन्तु मूत्ररुधिरासरकेन वापि॥
प्रलेपने चित्रमथैव सिद्धं विनाशमायाति च कण्डुकुष्ठम्।
विचर्चिकां नाशयते च कण्डूं विस्फोटमाशु प्रतिसर्पणानि॥
भृङ्गराजो हरिद्रा च दूर्वाजाजी विडङ्गकाः।
कृष्णाशिलाश्चित्रकाणि तथैव हरिचन्दनम्॥
मूत्रेण पेषितं तच्च लेपनं चित्रकुष्ठिने।
हन्ति दद्रूणि सर्वाणि कुष्ठं दद्रूविचर्च्चिकाः॥

निविदाहीनि चान्नानि वातलानि तथैव च।
ज्वरे प्रोक्तानि पथ्यानि तानि चात्र प्रयोजयेत्॥
व्रणेषु कुष्ठराजीषु हितमेवोपचारिणाम।

इति श्रीमदात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने कुष्ठचिकित्सा नाम षट्त्रिंशोऽध्यायः।

इति कायतन्त्रं समाप्तम्।

---

## ऊनचत्वारिंशत्तमोऽध्यायः।

अथ शालाक्यम्।

### अथ शिरोरोगचिकित्सा।

आत्रेय उवाच।

अतिभारातियोगेन अतितीक्ष्णोष्णसेवनात्।
विनाभ्यङ्गेन वा शैत्यात् पित्तेनातिविशेषतः॥
क्रिमिदोषेण वा पुंसां जायते च शिरोगदः।
वातरक्तकफात् पित्तात् पित्तेनापि विशेषतः॥
सन्निपातेन विज्ञेयाः क्रिमिजाश्च तथापरे।
अर्द्धशीर्षविकारश्च दिनवृद्धिकरस्तथा॥
वातेन रात्रौ भवते व्यथा च तथातुरस्य व्यथते शिरश्च।
सौख्यं लभेत् स्वेदनमर्दनेन वातेन सा विड्वपणे रुजा वा॥
यस्योष्णमङ्गं भवते शिरस्यं घर्मे सतापे च दिने च रात्रौ।
सधूमतो वा कटुको बलाशे वातात् सुखं वा निशि स्वास्थ्यमेति॥
शीतात् सुखं वा प्रथमश्च तृष्णा सतीव्रपित्ताद् भवते रुजा च।
सूर्योदये वा भवते दिनान्ते भ्रमश्च तृष्णा भवते सुतीव्रा॥
सजाड्यसुप्तं भवते च शीतं स्वेदेन युक्तं युगलञ्च नूनम्।
दृष्ट्यनेत्रं नयते च तद्वा कफे यदोष्टः शिरसो विकारः॥
स्रोतेन नासापुटकेऽपि जालं निरेति शेषा वदने च तृष्णा।

रक्ताद्यमन्या जठरे च यस्य तमाहू रक्तोद्भवशीर्षरोगम् ॥
मध्यं प्रदूष्य प्रतनोति पीता नासापरिस्राविं सविड्जलञ्च ।
मजाद्यमोहश्वसनञ्च यस्य शिरोविरोधाद् भवते शिरोऽर्त्तिः ॥
यस्यातिमात्रं शिरसि प्रतोदो विभज्यमानेऽपि च मस्तकान्ते।
घ्राणे परिस्रावि सरक्तपूयं क्रिमिप्रसूता च शिरोव्यथा च ॥

क्रोधाच्छोकाद्भवेद्वान्या व्यायामेऽतिश्रमेषु च ।
सा वातेन शिरःपीड़ा सरुजे च नृणामपि ॥
अतिलेखनपाठेन तथा सूक्ष्मान्निरीक्षणात् ।
दूरदृष्टेक्षणेनापि वेदना वातरक्तजा ॥
नासिकार्द्धे व्यथा तस्य व्यथा भ्रूयुगले भवेत् ।
नीलं कृष्णञ्च पश्येत वेदना मस्तके भवेत् ॥
न रक्तेन विना पित्तं रक्तं पित्तेन चाल्यते ।
न पित्तेन शिरोऽर्त्तिः स्यात् पित्तं वातेन चाल्यते ॥
तस्माद्वच्येऽप्युपाचारं शृणु भेषजलक्षणम् ।
स्वेदः प्रलेपनं नस्यं पानाभ्यङ्गश्च मर्दनम् ॥
स्वेदनं वातकफजे चाभिघाते तथा पुनः ।
पित्तजे रक्तजे वापि न कुर्य्यात् स्वेदनं तयोः ॥
रक्तजे च शिरा वेध्या पित्तजे वापि कुत्रचित् ।
कोकिलाख्या च तर्क्कारी कटुका निम्बपत्रकैः ॥
शोभाञ्जनकपत्रैस्तु क्वाथवाष्पेन स्वेदयेत् ।
अमीषाञ्च प्रलेपेन सौख्यं चास्य प्रजायते ॥
संशीतपरिषेकैश्च यष्टीमधुकचन्दनैः ।
केशरैर्मातुलुङ्गैश्च पित्तजे शीतलेपनम् ॥
कदम्बार्जुनसिन्धुश्च लेपनार्थं भिषग्वर ! ।
गुडेन नागरा वापि पथ्यं वापि गुड़ेन वा ॥
गुड़शोभाञ्जनरसैर्नस्ययोगात् पृथक् पृथक् ।

नस्येन वातमूत्रेण शिरोऽर्त्तिं सोपशाम्यति ॥
कट्फलं मरिचं पथ्या मूत्रं षोष्णोदकेन वा।
नस्यं कफोद्भवे घोरे शिरोरोगे भिषग्वर!॥
वचामधुकसारं वा मूलं वा गिरिकर्णिका।
नस्यप्रयोगे विहितं सन्निपाते शिरोगदे॥
बन्ध्याकर्कोटकीमूलं पीतमुष्णेन वारिणा।
मितं नस्ये प्रयुञ्जीत क्रिमिजे च शिरोगदे॥

अथ तैलम्।

भृङ्गराजरसं चैकं द्विभागं काञ्जिकेन च।
शोभाञ्जनं भागत्रयं सर्वं तत्र विनिक्षिपेत्॥
सौवीरकरसं पञ्च षड्भागं तुम्बिकारसम्।
शुण्ठी सैन्धवमञ्जीका पटोलं वासकं शिवा॥
अभया सुरसा चैव तैलञ्च चतुरंशकम्।
पाचितं तत्तु नस्येन योजयेत् च षड्विन्दुकम्॥
तथैव मस्तकाभ्यङ्गे हितं स्यात् कर्णपूरणे।
हितं वातादिजे रोगे शिरोऽर्त्तौ क्रिमिजे तथा॥

इति षड्विन्दुकं नाम तैलम्।

करञ्जवीजस्य विभीतकानां पुटेन तैलं परिस्रुत्य धीमान्।
विन्दुत्रयं नस्यविधौ प्रयोज्यं हन्याच्च कुष्ठं क्रिमिजं विकारम्॥

इति विन्दुत्रयं तैलम्।

कुष्ठं च यष्टीमधुकं च नीत्वा पटोलजातीसुरसारसञ्च।
विपाचितं तन्नवनीतकञ्च घृतेन नूनं च सरक्तपित्ते॥
सशर्करायुक्तमिदं दिवा च गव्यं प्रवृद्धप्रभवे च दोषे।
लाक्षारसं चन्दनयष्टिकानां पटोलधात्रीफलशर्कराणाम्॥
दध्ना च दुग्धं नवनीतकञ्च विपाचिते नस्यविधौ प्रयुज्यते।

भ्रूदोषशङ्खचतजच्चये वा दिनादिवृद्ध्या प्रभवेऽपि दोषे ॥

इति लाक्षादितैलम् ।

कुङ्कुमं यष्टिमधुकं कुष्ठञ्च शर्करासमम् ।
पक्कञ्च नवनीतेन घृतं नस्ये प्रयोजयेत् ॥
नश्यन्ति पित्तजा रोगा दिनवृद्ध्योपवर्जनात् ।
अर्द्धशीर्षविकारश्च प्रशमं याति सत्वरम् ॥

इति श्रीमहर्ष्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने शिरोरोग-चिकित्सा नाम ऊनचत्वारिंशत्तमोऽध्यायः ।

---

## चत्वारिंशत्तमोऽध्यायः ।

अथ भ्रूदोषचिकित्सा ।

आत्रेय उवाच ।

अतिपठनशीलस्य सूक्ष्मवस्त्वीक्षणेन वा ।
दूरालोकेन चोष्णेन भ्रूदोषश्चोपजायते ॥
रक्तवाताश्रितो दोषः पित्तेन सह मूर्च्छितः ।
भ्रूव्यथा च प्रभवति नासावंशोद्भवा शिरा ॥
व्यथते चोष्णवेलासु शीतेन स्याद्विशेषतः ।
नेत्रमग्नेर्नीलपीतमण्डलानि च पश्यति ॥
तस्यादौ च क्रियां कुर्य्याच्छिरा वेध्या प्रयत्नतः ।
पूर्वोक्तं स्वेदनं कार्य्यं नस्ये षड्बिन्दुकादिकम् ॥
देवदारु रजनी घनं शठी पुष्करं कुटजबीजमागधी ।
कुष्ठरोध्रचविका च वासकं क्वाथितं पुनरेव विस्रुतम् ॥
तत्र गुग्गुलुं विनिक्षिपेत् पुनः शुण्ठिसैन्धवफलत्रिकं हितम् ।
चूर्णितं दधिपयोविमिश्रितं पाचितञ्च नवनीतकञ्च तत् ॥
सिद्धमेव विदधीत शीतलं शर्करायुतमिदं हि नस्यकम् ।

नस्यकर्म शिरसो रुजापहं भ्रूललाटभुजशङ्खमूलकम् ॥
शीर्षरोगमपि चार्द्धशीर्षकं तोदने च विहिते न केवलम् ।
कर्णरोगमपि वारयत्यपि तैलमपि शिरोरोगहरं परम् ॥
ताम्बूलपत्रस्य रसं विडङ्गं सिन्धूद्भवं हिङ्गुगुडेन युक्तम् ।
जलेन पिष्टं विहितं च नस्यं भ्रूशङ्खदोषांश्च क्रिमीन्निहन्ति ॥

इति श्रीमदृष्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने भ्रूदोषचिकित्सा नाम चत्वारिंशत्तमोऽध्यायः ।

---

## एकचत्वारिंशत्तमोऽध्यायः ।

अथ नासारोगचिकित्सा ।

आत्रेय उवाच ।

नासारोगो भवेत् धीमन् ! क्रिमिजो दोषजः पुनः ।
रक्तजश्च भिषक्श्रेष्ठ ! लक्षणञ्च शृणुष्व मे ॥
वाताच्छिरोऽर्त्तिः शोथश्च सदोषे वातपैत्तिकम् ।
कफजे सघनं शीतं क्रिमिजेऽसृक्प्रवाहनम् ॥
नासापाके गुडं शुण्ठ्या वातिके नस्यमेव च ।
शर्करा घृतयष्ट्या च पैत्तिके नस्यमेव च ॥
श्लैष्मिके सुरसावासारसेन विहितञ्च तत् ।
विडङ्गहिङ्गुमगधाः क्रिमिदोषे हिता मताः ।
रक्तजेऽसृग्विरेकश्च शिरोरोगप्रशान्तये ॥

इति श्रीमदृष्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने नासारोगचिकित्सा नाम एकचत्वारिंशत्तमोऽध्यायः ।

---

## द्विचत्वारिंशत्तमोऽध्यायः।

### अथ इन्द्रलुप्तचिकित्सा।

आत्रेय उवाच।

केशघ्नस्य चिकित्सान्तु शृणु हारीत ! साम्प्रतम्।
रूक्षं सपाण्डुरं वातात् पित्तादूक्तं सदाहकम्॥
कफान्वितं भवेत् स्निग्धं रक्तात् पाकं व्रजन्ति तत्।
सन्निपातेन सदृशं जायते सर्वलक्षणम्॥
गुड़ेन सुरसा शुण्ठी मातुलुङ्गरसेन तु;
केशघ्ने वातसम्भूते धावनञ्च प्रशस्यते॥
त्रिफला च वचा शुण्ठी गुड़ेनापि प्रपेषितम्।
धावनं कफसम्भूते चेन्द्रलुप्ते प्रशस्यते॥
पैत्तिके च ृतं दुग्धं नवनीतान्वितं तथा।
सिताशिवाफलं यष्टी पैत्तिके धावनं मतम्॥
भृङ्गराजरसं ग्राह्यं शृङ्गवेररसं तथा।
सौवीरकरसेनापि तिलान् पिष्ट्वा प्रलेपनम्॥
पश्चात् कार्य्यं पुरुषेण स्नानमुष्णेन वारिणा।
धवार्जुनकदम्बस्य शिरीषमपि रोहितम्॥
क्वाथमेषां शिरोदद्रून् शमयेदिन्द्रलुप्तकम्।
कुरुवकस्य पुष्पेण जपायाः कुसुमेन च॥
घृष्टस्य चेन्द्रलुप्तस्य क्षतमेव निवारणम्।
पैत्तिकानि च लिङ्गानि दृष्ट्वा दुग्धेन धावनम्।
शीतलानि प्रदेयानि पैत्तिके न विधीयते॥
धुस्तूरपत्राणि च मागधीनां निशाविशालागृहधूमकुष्ठम्।
घृतेन युक्तञ्च जलेन पिष्टं शिरःप्रलेपे क्षतवारणं स्यात्॥
पित्ते क्षते दोषयुते च रोगे पटोलपत्रं पिचुमर्दकं वा।
तथामलक्याः फलमेव पिष्ट्वा घृतेन खण्डेन प्रलेपनञ्च॥

निवार्य्यते मस्तकजं सतञ्च शिरोऽर्त्तिसङ्घान् विनिहन्ति चैतत्।
गजेन्द्रदन्तस्य मषीं गृहीत्वा प्रलेपनं वा नवनीतकेन॥
तिलार्कभल्लातकदग्धमाषक्षारस्य लेपो नवनीतकेन।
सर्पस्य क्षारस्य तथा प्रयोग: खल्लाटके केशचयं करोति॥

इति श्रीमदर्थ्यात्रियभाषिते हारीतोत्तरे तृतीयस्थाने इन्द्रलुप्तचिकित्सा नाम द्विचत्वारिंशत्तमोऽध्याय:।

---

## त्रिचत्वारिंशत्तमोऽध्याय:।

अथ कर्णरोगचिकित्सा।

आत्रेय उवाच।

शक्थेन वा तोयविपूरणेन मलेन वा चाति भवेद्रुजा च।
श्लेष्मासरोधाद्भवते तथापि वातादिकैर्वा कुपितैरथापि॥
सर्गदोषैरपि सर्वदोषै: क्रिमिव्रणेनापि तथैव चान्या।
सञ्जायते कर्णरुजा नरस्य शृणोति तेनापि बहुस्वनांश्च॥
न:स्वानमेघध्वनिदन्तशब्दान् शूलं सदाहञ्च शिरोव्यथा च।
गुणस्वनं वत्स! शृणोति सर्वं पित्तेन तं विद्धि भिषग्वरिष्ठ!।
था च मूर्च्छां प्रतनोति शब्दं मेघस्वनं वा कफजे शृणोति॥
क्रिमिदोषे स्रवेत् पूयं सरक्तं वापि पुत्रक!।
तथाचैवाभिघातेन जायते तीव्रवेदना॥
क्षतेन पूयं स्रवते वात्याद्भवति चापर:।
तत्रापि लूतादोषेण जायते कर्णजा रुजा॥
कर्णरोगे जलपूरणञ्च न चूर्णमेतत् कथितं विधिज्ञै:।
ं हितं स्वेदनमेव कर्णे सवाष्पविन्दुश्च हितो मतश्च॥
समुद्रफेनं सिन्धूत्थं सूक्ष्मचूर्णञ्च कारयेत्।
सौवीरकरसेनापि वातिके कर्णपूरणम्॥
आर्द्रसौवीरकरसं शुण्ठीसैन्धवगुग्गुलुम्।

माषकुल्माषतोयेन तैलं पक्वातिशोषणकम् ।
तुम्बीरसश्च धार्य्येत कर्णरोगे प्रशस्यते ॥
यष्टीमधुः कुष्ठमरिष्टपत्रं निशाविशालासुमनःप्रवालाः ।
विपाचितं कर्णभवे च शूले सपैत्तिके वा घृतमेव शस्तम् ॥
ब्राह्मीरसं सैन्धवकं विड़ङ्गं सभृङ्गराजस्य मृतेन युक्तम् ।
तथैव सौवीररसश्च पथ्या सुतश्च वस्त्रं परिपूर्णमेतत् ।
हितम्भवेत् तत् श्रुतिपूरणाय पूयं सरक्तं क्रिमिजं निहन्ति ॥
सर्वे प्रोक्ताः शिरोरोगास्तैलानि च घृतानि च ।
ज्ञात्वाविकान् वा युञ्जीत शिरोरोगविदांवरः ।
वातहारीणि पथ्यानि विदाहीनि गुरूणि च ॥

इति श्रीमहर्षात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने कर्णरोगचिकित्सा नाम त्रिचत्वारिंशत्तमोऽध्यायः ।

---

## चतुश्चत्वारिंशत्तमोऽध्यायः ।

अथ नेत्ररोगचिकित्सा ।

आत्रेय उवाच ।

उष्णातिक्षारकटुकैरभिघातेन वा पुनः ।
सूक्ष्मवस्त्वीक्षणेनापि दोषाः कुप्यन्ति नेत्रजाः ॥
सहजा ये पराजेया वक्ष्यामि शृणु लक्षणम् ।
रूक्षः कण्डूश्च तोदश्च शुष्कशीतास्रसन्ततिः ।
वातिकं तं विजानीयात् पैत्तिकं शृणुतः परम् ।
सरक्तदाहे नेत्रे च उष्णस्रावश्च पैत्तिके ॥
शोफकण्डूःसन्निपाते शीतजाड्ये कफात्मके ।
द्वन्द्वजो मिश्रलिङ्गैश्च सर्वैस्तैः सान्निपातिके ।
एतद्विलक्षणं ज्ञात्वा चोपचारं शृणुष्व मे ॥

शुण्ठीसुराष्ट्रसुरसाः सह काञ्जिकेन
चोष्णेन धावनमिदं सह पैत्तिके च।
श्लेष्मोद्भवे त्रिफलकल्कमिदं समूत्रं
प्रशस्तमन्यैः कथितं भिषग्वरैस्तथा॥
शुण्ठी शठी च रजनी त्रिफला सनिम्बा
पत्राणि सैन्धवयुतानि तुषाम्लकेन।
शस्तं वदन्ति नयने च ससन्निपाते
रक्तोद्भवे च सरुजे च तथा प्रशस्तम्॥
फलत्रिकं दारुनिशासु धूमो वचासु वर्षाभवसैन्धवेन।
लेपनं श्लेष्मभवे विकारे सवातिके वा हितमेव शस्तम्॥
शुण्ठीसैन्धवतक्रेण ताम्रभाण्डे विघर्षितम्।
अपामार्गस्य मूलं वा मूलं क्षुरकस्य वा।
अञ्जनस्य हितं तेषां वातनेत्रामयापहम्॥
दुग्धोत्पन्नं नवनीतं यष्टी निम्बस्तिलाश्च संयोज्याः।
त्रिफला गुड़संयुक्ता लेपनं कफनेत्रजरोगघ्नम्॥
शुण्ठी सैन्धवतुल्यं मागधिका ताम्रभाजने घृष्टम्।
दध्ना घृतेनाञ्जनकं निहन्ति सर्वांश्च नेत्रगदान्॥
तपित्तकफदोषसम्भवान् नेत्रयोर्बहुव्यथां हरते क्षणात्।
क एव हरति प्रयोजितः शिग्रुपल्लवरसः समाक्षिकः॥

अथ पुष्पचिकित्सा।

पूर्वाहारविहारैस्तु नेत्रे पुष्पस्य जायते।
प्रथमं सुखसाध्यं स्याद्द्वितीयं कष्टसाध्यकम्॥
तृतीयं यत्नसाध्यन्तु चतुर्थं तदसाध्यकम्।
शङ्खपुष्पं तथा रोध्रं शङ्खनाभिर्मनःशिला॥
काञ्जिकेन तु सम्पिष्टा छायाशुष्का भिषग्वर!।
वातिके काञ्जिकेनापि पैत्तिके पयसा हिता॥

श्लेष्मले मूत्रसंयुक्ता पुष्पस्याञ्जनके हिता ।
भृङ्गराजरसेनापि त्रिदोषशमने हिता ॥
हरीतकी वचा कुष्ठं पिप्पली मरिचानि च ।
विभीतकस्य मज्जा वा शङ्खनाभिर्मनःशिला ॥
एतानि समभागानि अजाक्षीरेण पेषयेत् ।
नाशयेत् तिमिरं काण्डू पाटलान्यर्वुदानि च ॥
हन्ति पुष्पं सपटलं रात्र्यन्धञ्च नियच्छति ।
क्षताभिघातशोकेन अग्निदग्धञ्च वा पुनः ॥
काचञ्च नीलिका चैव सिद्धिमिच्छन्ति नेत्रयोः ।

इति पुष्पचिकित्सा ।

बाल्याद्दोषबलाद्दैवदुष्टदाराभिषेवणात् ।
वार्द्धक्याच्चैव पटलं तस्य वक्ष्यामि लक्षणम् ॥
वातात् सकश्मलं रूक्षं पित्तान्नीलञ्च पीतकम् ।
कफेन शुभ्रं सघनं रक्तेनारक्तकं विदुः ।
सन्निपातादिलिङ्गैश्च अतो वक्ष्यामि भेषजम् ॥

शुण्ठीवचारजनितुल्यमनःशिला च
शोभाञ्जनाञ्जनविशालजटा च शङ्खम् ।
वास्तूकमूलमधुसैन्धवकट्फलानां
सौवीरकेण परिमर्दनवर्त्तिरेषा ।
छायाविशुष्कनयनाञ्जनके प्रशस्तं
नाशं नयेत् पटलनेत्रजरोगसङ्घान् ॥

साञ्जना सकट्फला च हरीतक्या मनःशिला ।
गुडेन कट्फलञ्चापि निहन्ति नेत्रप्रच्छदम् ॥

महाविभीतकफलस्य च शङ्खनाभि-
घृष्टं ससैन्धवयुतं पयसाम्लकेन ।

वर्त्तिर्गुडेन नयनाञ्जनके हिता च
पित्तप्रसूतपटलस्य निवारणञ्च ॥

इति पटलचिकित्सा।

मधूमञ्च सवातञ्च रूक्षमुष्णादिकं तथा।
कटुकाम्लं व्यवायञ्च वर्जयेन्नेत्ररोगिणाम् ॥

इति श्रीमदृर्ष्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने नेत्ररोगचिकित्सा नाम चतुश्चत्वारिंशत्तमोऽध्यायः।

---

## पञ्चचत्वारिंशत्तमोऽध्यायः।

अथ मुखरोगचिकित्सा।

आत्रेय उवाच।

ओष्ठौ च स्फुटितौ यस्य वातिवाहेन वातिकात्।
तस्य सर्पिर्म्रक्षणञ्च चोष्ठदारणवारणे ॥
सदाहश्च भवेत् सौख्यं पैत्तिकं तं विनिर्दिशेत्।
मधुना नवनीतेन ओष्ठयोर्म्रक्षणं मतम् ॥
लेपनं चोष्ठरोगेषु शर्करासहितं दधि।
सरक्तमोष्ठरोगञ्च दृष्ट्वा रक्तावसेचनम्।
धवार्जुनकदम्बानां प्रलेपः स्यात् सुखावहः ॥

इति ओष्ठरोगचिकित्सा।

कृष्णा दन्तावलिर्यस्य दन्तमूलं च वातिकात्।
चलनं वा प्रदृश्येत वातिकञ्च विनिर्दिशेत् ॥
पैत्तिकात् पित्तदाहश्च दन्तमांसं विनिर्दिशेत्।
श्लैष्मिके दन्तपाके च शोफः स्यात् श्वेतता भृशम् ॥
रक्तजे जायते कण्डूरक्तस्रावश्च दृश्यते।
सूयते दन्तमांसञ्च रक्ते दन्तपुटे तथा ॥
सच्छिद्रं दन्तमूलञ्च सबलं शूलमेव च।

दन्तमांसं विशीर्य्येत क्रिमिजा दन्तरुग् भवेत् ॥
वचायवानीसहचित्रकेण सिन्दुत्थविश्वासहसिन्धुवारम् ।
कल्कं तथोष्णञ्च सदन्तरोगे मुखे च गण्डूषशतानि पञ्च
सर्व्वेषु मुखरोगेषु हितमेतत् प्रशस्यते ।
वचासैन्धवशुण्ठ्या च घर्षणं दन्तमूलके ॥
यवानीञ्च वचां रात्रौ दन्तमूले च धारयेत् ।
पित्तदन्तजरोगेषु नवनीतं सशर्करम् ॥
धात्रीफलेन संघृष्टं दन्तरोगनिवारणम् ।
श्लैष्मिके दन्तरोगे च हरीतक्या गुड़ेन वा ॥
घर्षणञ्च प्रशस्तं च त्रिफलाक्वाथसंयुतम् ।
अहिमारकमूलस्य क्वाथो गण्डूषधारणात् ॥
खदिरस्य तथा क्वाथो यवानीक्वाथ एव च ।
क्वाथश्च निम्बमूलस्य दन्तरोगनिवारणः ॥
रक्तजे तु विकारे च घर्षो लवणसर्षपैः ।
रक्तञ्च स्रावयेत् तस्य दृष्टमोष्ठपुटे च तत् ॥
विड़ङ्गं हिङ्गु सिन्धुञ्च वचाचूर्णेन घर्षयेत् ।
क्रिमिजे दन्तरोगे च हितमेतत् प्रशस्यते ॥

इति दन्तरोगचिकित्सा ।

जिह्वायां पीड़का यस्य जिह्वापाकं विनिर्दिशेत् ।
वातिके सरुजा कृष्णा पित्तेन दाहसंयुता ॥
श्लेष्मणा सघना श्वेता सर्व्वे वै सान्निपातिके ।
वचाभया विड़ङ्गानि शुण्ठी सौवर्च्चलं कणा ॥
घृतेन युक्तं जिह्वायां घर्षणं वातिके गदे ।
काञ्जिकेन तु तक्रेण सोष्णगण्डूषधारणम् ॥
यष्टीकं चन्दनं मुस्ता मागधी मधुसंयुतम् ।
लेपने पैत्तिके दोषे जिह्वास्फोटकवारणम् ॥

शीतेनापि च दुग्धेन हन्ति गण्डूषधारणम्।
दन्तरोगे तथा जिह्वापाके तच्च हितं विदुः॥
रोध्रार्जुनकदम्बानां क्वाथस्तोयः सुखावहः।
श्लेष्मोद्भवे मुखपाके हितं गण्डूषधारणम्॥
रक्तजेषु विकारेषु रक्तस्रावञ्च कारयेत्।
कण्टकेनापि हि जिह्वायाश्चौरयित्वा विलेपनम्॥
मूर्वामुस्ताभयाशुण्ठीमागधीरजनीद्वयम्।
गुड़ेन मधुना युक्तं लेपनं रक्तजिह्वके॥
मरिचञ्च वचा कुष्ठं हरीतक्याश्च चूर्णितम्।
घर्षणं श्लेष्मले जाते जिह्वापाके हितं विदुः॥

इति जिह्वापाकप्रतीकारः।

तिलपिच्छिलगौल्यादिसेवनातिद्रवादपि।
नवोदकेन कफजो जायते घण्टिकागदः॥
जिह्वामूले कण्ठसन्धौ श्लेष्मरक्तसमुद्भवः।
तेनास्यशोषो जड़ता ज्वरो मन्दश्च जायते॥
शिरोव्यथारुचिस्तन्द्रा तथास्यजड़ता भवेत्।
तर्जन्यां कण्ठमध्ये तु संपीड्य रक्तग्रन्थिका॥
परिस्रुतं तथा रक्तं तदा विम्लापनं हितम्।
वचाश्च मरिचं कृष्णाचूर्णं तत्र निधापयेत्॥
मर्दनं स्यात् कण्ठदेशे तेन ग्रन्थिर्विलीयते।
धान्यनागरजीमूतवचान्यग्रोधशुङ्गकाः॥
क्वाथः स्वेदो घण्टिकाया मुखे गण्डूषधारणम्।
दिवारात्रौ वचाग्रन्थिं मुखे सन्धारयेद्भिषक्॥
तेन सौख्यं भवेत् तस्य मुखरोगाद्विमुच्यते।

इति घण्टिकारोगः।

गले च घण्टिकामार्गे रक्तश्लेष्मविकारजा।

लम्बिका वर्द्धते नृणां विज्ञेया गलशुण्डिका ॥
रुध्यते चास्य मार्गश्च नेत्रस्रावः प्रदृश्यते ।
शिरोऽर्त्तिः श्वासकासश्च ज्वरेणैव प्रपद्यते ॥
आशुकारी महाप्राज्ञः शीघ्रं कुर्य्यात् प्रतिक्रियाम् ।
शस्त्रेण शुण्डिकां छित्वा कुर्य्याद्विम्लापनं हितम् ॥
मागधीमरिचं पथ्या वचाधान्ययवानिकाः ।
क्वाथः सोष्णः स्वेदनञ्च गलशुण्डोपशान्तये ॥
दिवारात्रौ यवान्याश्च मुखे संधारणं हितम् ।
मर्दनं कण्ठदेशे तु तेन संपद्यते सुखम् ॥
सिद्धार्थकं वचा कुष्ठं रजनी पारिभद्रकम् ।
गृहधूमं सलवणं कण्ठे वा लेपनं हितम् ॥
ज्वरे प्रोक्तानि पथ्यानि यानि तानि महामते ! ।
न शीत्यं पिच्छिलं सेव्यं तैलं नैव गलामये ॥

इति गलशुण्डिकाचिकित्सा

इति श्रीमहर्षात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने मुखरोगचिकित्सा नाम पञ्चचत्वारिंशत्तमोऽध्यायः ।

---

## षट्चत्वारिंशत्तमोऽध्यायः ।

### अथ क्लीवानां वाजीकरणम् ।

आत्रेय उवाच ।

क्लैव्यं पञ्चविधं प्रोक्तं समासेन शृणुष्व मे ।
निरोधातिव्यवायेन वयःश्रान्तेऽपि मानवे ॥
जायते रेतसो हानिः क्लीवत्वञ्चापि जायते ।
त्रिविधं जायते क्लैव्यं मानसं रेतसः क्षयात् ॥
सहजं शुष्कसंस्वेदाज्जायते क्लीवता नरे ।
यस्य वै समता चित्ते दृष्ट्वा स्त्रीणां विरागिताम् ॥

स्पर्शने खेदकं पश्च तत् साध्यं मानसं स्मृतम्।
यस्य विद्वेषतः स्त्रीणां व्यवायेन मनःक्षतिः॥
ध्वजभङ्गो भवेच्छीघ्रं तत् क्लैव्यं रेतसः क्षयात्।
समप्रकृतिर्यस्यान्यः सोऽप्यसाध्यतमः स्मृतः॥
मनःक्षये मनोद्रेको मुग्धस्त्रीसहसङ्गमः।
सरागविभ्रमकथालापैः संवर्द्धते मनः।
शुक्रक्षये शुक्रवृद्धिं कथयिष्यामि साम्प्रतम्॥
ःारिकागोक्षुरमूषलानां धात्रीफलं स्यात् सहसैन्धवानाम्।
ाानि चैतानि च मागधीनां युक्तं सिताढ्यं पयसा पिबेच्च॥
ं वृहत्यौ मगधाविकण्टा तथात्मगुप्ता सशतावरी च।
ार्करं गोपयसो घृतेन पानं नराणां प्रकरोति वीजम्॥
यवगोधूममाषाणां निस्तुषाणाञ्च चूर्णकम्।
दुग्धेनेक्षुरसेनापि संस्कृत्य च घृतेन तु॥
पाचितं वटकश्रेष्ठं भक्षयेत् प्रातरुत्थितः।
तस्योपरि पयःपानं पिप्पलीशर्करान्वितम्॥
यवक्षारविदारीश्च माषचूर्णं तथा यवान्।
मरिचानां सिताढ्यञ्च घृतानाञ्च प्रपोलिकाम्॥
पाचयेद्भक्षयेत् प्रातः पयःपानं तथोपरि।
वीर्यञ्च कुरुते पुंसां वनिता रमते भृशम्॥
गुडूची शतमूली च स्वयंगुप्ता वला तथा।
शाल्मलीमुषलीमूलं चूर्णं गोपयसान्वितम्।
पानं नराणां श्रेष्ठं तु वीजमिन्द्रियकारकम्॥
ःारिकन्दांशुमती वृहत्यौ काकोलिका भीरु पुनर्नवे द्वे।
ाटकं मागधिका वला च चूर्णं सिताढ्यं सितया प्रयोज्यम्॥
र्णं पयःपायसमेव योज्यं करोति पुंसां वलमेवमोजः।
णां सहस्रं भजतेऽपि षण्ढो मासद्वयेनापि च सेवमानः॥

वर्जयेत् कटुकं चाम्लं तीक्ष्णं चोष्णं विदाहि च।
रूक्षं वापि च सौवीरं प्रोक्तानि चेन्द्रियक्षतौ॥
पलाण्डु यवसं कन्दान् तिलान् माषान् यथावलम्।
तथौदनं विशालीनां दुग्धं चेक्षुरसं तथा॥
वास्तुकं चिल्लकानाञ्च पथ्ये शुक्रक्षयादपि।
वर्जयेत् शूरणं शुण्ठीं योगयुक्तो न योजयेत्॥

इति श्रीमहर्ष्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने वाजीकरणं नाम षट्चत्वारिंशत्तमोऽध्यायः।

---

## सप्तचत्वारिंशत्तमोऽध्यायः।

अथ बन्ध्योपक्रमः।

आत्रेय उवाच।

बन्ध्या स्यात् षट् प्रकारेण बाल्येनाप्यथवा पुनः।
गर्भकोषस्य भङ्गाद्वा तथा धातुक्षयादपि॥
जायते न च गर्भस्य सम्भूतिश्च कदाचन।
काकबन्ध्या भवेच्चैका अनपत्या द्वितीयका॥
गर्भस्रावी तृतीयान्या कथिता मुनिसत्तमैः।
मृतवत्सा चतुर्थी स्यात् पञ्चमी च बलक्षयात्॥
तस्योपक्रमणं वक्ष्ये येन सा लभते सुतम्।
अजातरजसां स्त्रीणां क्रियते यदि मैथुनम्॥
तेनैव गर्भसङ्कोचं भगत्वमुपगच्छति।
तेन स्त्री भवते बन्ध्या गर्भं गृह्णाति नो भृशम्॥
सा च कष्टेन भवति रामा गर्भवती पुनः।
औषधैश्चोपचारैश्च सिद्धिश्चापि न संशयः॥
अनपत्यबलेनापि जायते भिषजां वर!।
न भवेत् काकबन्ध्या च अनपत्यापि सिध्यति॥

सिध्यन्ती क्षीणधातुत्वाद् जायते सा भिषग्वर !।

औषधानि।

चन्दनोशीरमञ्जिष्ठापटोलं घनबालकम्।
मधुकं मधुयष्टी च तथा लोहितचन्दनम्॥
सारिवा जीरकं मुस्तं पद्मकञ्च पुनर्नवा।
क्षीरेण शर्करायुक्तं पानं पित्तोद्भवे गदे॥
ज्ञात्वा योनिविशुद्धिञ्च तत्र दद्यान्महौषधम्।
चन्दनोशीरमञ्जिष्ठा गिरिकर्णी सिता तथा॥
क्षीरेणालोड़िता पित्ते पुष्पसिद्धिं करिष्यति।
रजोरक्तं परीक्षेत वातपित्तकफात्मकम्॥
सरुजञ्च सकृष्णञ्च पक्वजम्बूनिभञ्च यत्।
वातेन बाधितं पुष्पं तच्चैव लक्षयेद्बुधः॥
तत्र नागरपिप्पल्यौ मुस्ताधन्वयवासकम्।
बृहत्यौ पाटला चैव क्वाथः सगुड़को दधि॥
सप्ताहं पाययेद्धीमान् यावत् स्रवति शोणितम्।
विशुद्धे च तथा रक्ते पाययेत् पयसान्वितम्॥
श्वेता च गिरिकर्णी च श्वेता गुञ्जा पुनर्नवा।
तेन सा लभते गर्भं मासमेकं प्रयोगतः॥
जपाकुसुमसङ्काशं कुसुम्भरक्तसन्निभम्।
दाहशोषमूत्रकृच्छ्रयुक्तं तत् पित्तदूषितम्॥
चन्दनोशीरमञ्जिष्ठापटोलं घनवालकम्।
मधुकं यष्टिमधुकं तथा लोहितचन्दनम्॥
पुनर्नवे पद्मकञ्च शारिवा जीरकं घनम्।
क्षीरेण शर्करायुक्तं पानं पित्तकृते गदे॥
ज्ञात्वा योनिविशुद्धिञ्च तत्र दद्यान्महौषधम्।
श्वेतार्कमूलं पयसा श्वेता च गिरिकर्णिका॥

श्वेताद्रिकर्णिकामूलं पानं गोक्षीरसंयुतम् ।
बन्ध्यानां गर्भजननं भवते लक्षणान्वितम् ॥
सघनं पिच्छलञ्चापि जाड्यं स्यान्मूत्ररोधनम् ।
आलस्यतन्द्रा निद्रा च कफदुष्टं रजो विदुः ॥
त्रिफला गिरिकर्णी च तथारण्यधवल्लकी ॥
एतेषां पयसा पानं स्त्रीणाञ्च गर्भकारणम् ।
बलाद्यं चन्दनाद्यञ्च द्राक्षाद्यं चूर्णमेव च ॥
दापयेद्गर्भजननं नारीणां भिषगुत्तमः ।
खण्डखाद्यञ्च चूर्णञ्च बलाद्यं चूर्णमेव च ॥
दापयेद्गर्भजननं नारीणां भिषगुत्तमः ।
खण्डकाद्यञ्च चूर्णञ्च बलाद्यं चूर्णमेव च ॥
पुनर्नवाद्यं देयं वा स्त्रीणां गर्भप्रदायकम् ।
अथ पथ्यं प्रवक्ष्यामि स्त्रीणाञ्च शृणु पुत्रक ! ॥
कञ्चरं शूरणञ्चैव तथा चाम्लञ्च काञ्जिकम् ।
विदाहिकञ्च तीव्रञ्च स्त्रीणां दूरं परित्यजेत् ॥
बन्ध्याकर्कोटकीमूलं लाङ्गली कटुतुम्बिका ।
देवदाली द्विजननी सूर्य्यवल्ली च भीरुका ॥
निर्माल्यं माल्यवस्त्रञ्च तथा स्यादृतुसङ्गमः ।
अन्यस्त्रीस्नातमुदकं स्त्रीणां पथ्यस्योपक्रमः ॥

इति श्रीमद्दर्षिवियभाषिते हारीतोत्तरे तृतीयस्थाने बन्ध्योपक्रमो नाम सप्तचत्वारिंशत्तमोऽध्यायः ।

---

# अष्टचत्वारिंशत्तमोऽध्यायः।

अथ गर्भोपचारः।

आत्रेय उवाच।

प्रथमे मासि मधुकं मधुपुष्पाणि चैव हि।
नवनीतेन पयसा मधुरं पाययेच्च ताम्॥
द्वितीये मासि काकोलीमधुरं पाययेत् तथा।
तृतीये कृशरं श्रेष्ठं चतुर्थे च कृतौदनम्॥
पञ्चमे पायसं दद्यात् षष्ठे च मधुरं दधि।
सप्तमे घृतखण्डेन चाष्टमे घृतपूरकम्॥
नवमे विविधान्नानि दशमे दोहदं तथा।
मासे तृतीये सम्प्राप्ते दोहदं भवति स्त्रियाः॥
यद्यत् कामयते सा च तत्तद्दद्याद्भिषग्वरः।
वर्जयेद्विदलान्नानि विदाहीनि गुरूणि च॥
अम्लानि सोष्णक्षीराणि गुर्विणीनां विवर्जयेत्।
मृत्तिका भक्षणीया न न च शूरणकन्दकाः॥
रसोनश्च पलाण्डुश्च सन्त्यक्तो गुर्विणीस्त्रिया।
शूरणानि प्रदेयानि गौल्यानि सरसानि च॥
पथ्ये हितानि चैतानि गुर्विणीनां सदा भिषक्।
व्यायामं मैथुनं रोषं शीर्ष्यञ्चक्रमणं तथा।
वर्जयेद् गुर्विणीनाञ्च जायन्ते सुखसम्पदः॥

अथोपपन्नं विहितमपि स्वकीयाचारेण पञ्चमासिकमष्ट-
सिकं वा। ब्राह्मणमङ्गलादिभिर्गोत्रभोजनमपि कर्त्तव्यम्।
ऽदादिषु परिपूर्णेषु रूपवान् शूरः पण्डितः शीलवान् पुत्रो
ते।

इति श्रीमहर्ष्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने गर्भोपचारो नाम अष्टचत्वारिंशत्तमोऽध्यायः।

## ऊनपञ्चाशत्तमोऽध्यायः ।

अथ चलितगर्भचिकित्सा ।

आत्रेय उवाच ।

प्रथमे मासि गर्भस्य चलनं दृश्यते यदि ।
तदा मधुकमृद्वीकाचन्दनं रक्तचन्दनम् ॥
पयसालोड़ितं पीतं तेन गर्भः स्थिरो भवेत् ।
द्वितीये मासि चलिते मृणाले नागकेशरम् ॥
तृतीये मासि गर्भस्य चलनं दृश्यते यदा ।
तदा मूषककिट्टन्तु शर्करापयसा पिबेत् ।
चतुर्थे मासि दाहश्च पिपासा शूलमेव च ॥

ज्वरेण स्त्रीणां यदि गर्भश्चलते तदोशीरचन्दननागकेशर धातकीकुसुमशर्कराघृतसधुदधि पाययेत् । पञ्चमे मासि चलिते गर्भे दाड़िमीपत्राणि चन्दनं दधि मधु च पाययेत् । षष्ठे मासि गैरिकं कृष्णमृत्तिकागोमयभस्म उदकं परिस्रुतं शीतलं चन्दनं शर्करया सह पिबेत् । सप्तमे मासि गोक्षुरसमङ्गापद्मकघनसुशीरनागकेशरं मधुरं पाययेत् । अष्टमे मासि रोध्रं मधु मागधिकाञ्च सह दुग्धेन पीतवतीनां चलिते गर्भे स्त्रीणां सुखं सम्पद्यते ।

इति श्रीमहर्ष्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने चलितगर्भचिकित्सा नाम ऊनपञ्चाशत्तमोऽध्यायः ।

---

## पञ्चाशत्तमोऽध्यायः ।

अथ गर्भोपद्रवचिकित्सा ।

आत्रेय उवाच ।

शोषो हृल्लासमूर्च्छा च शोथो ज्वरस्तथारुचिः ।
अतीसारो विवर्णत्वमष्टौ गर्भस्योपद्रवाः ॥
वक्ष्यामि भेषजं तस्य यथायोगेन साम्प्रतम् ।

वटप्ररोहं मगधा चोशीरं घनमेव च ॥
घृतास्ये खण्डगुटिका विहिता शोषवारिणी।
वत्सकं मगधा शुण्ठी तथा चामलकीफलम् ॥
युक्तं कोमलविल्वेन दध्ना पिष्टन्तु दापयेत्।
शर्करासंयुतं पानं स्त्रीणां गर्भे हितं सदा ॥
शीतो भूनिम्बकल्कश्च शर्करासमभागतः।
छर्दिं हरेच्च हृत्क्लेदं मधुना वा समन्वितम् ॥
शृङ्गवेरं सकटुकं मातुलुङ्गस्य केशरम्।
मार्जनं दन्तजिह्वासु गण्डूषश्चोष्णवारिणा ॥
गुर्विणीनाञ्च सर्वासामरुचिञ्च नियच्छति।
वत्सकं दाड़िमं पाठा शुष्कविल्वबलास्तथा ॥
जम्ब्वाम्रपल्लवाश्चैव यथालाभेन सत्तम !।
शर्करादधिसंयुक्तं स्त्रीणाञ्चैवातिसारके ॥
हरीतकी नागरकं गुडेन त्रिफलोदकम्।
पीतं स्त्रीणां नाशयति विबन्धविद्रधिं गदम् ॥
मागधी त्रपुसैर्वारिवीजानि मूत्रबन्धने।
शिलाभेदं सिताढ्यञ्च पिबेत् तण्डुलवारिणा।
मूत्ररोधं गुर्विणीनां वारयत्याशु निश्चितम् ॥
मधुकविषमृणालं पद्मकिञ्जल्ककल्कं
घनमतिविषमैन्द्रं वीजमौशीरनीरम्।
समक्षतमथ कल्कं देयमाशु प्रपाने
हितमपि युवतीनां गर्भचाले सिताढ्यम् ॥
गर्भस्योपद्रवाः शोथाः स्वेदयेदुष्णवारिणा।
न दातव्यो मतिमता विरेको दारुणो महान् ॥

इति श्रीमदृषिवर्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने गर्भोपद्रवचिकित्सा पञ्चाशत्तमोऽध्यायः।

## एकपञ्चाशत्तमोऽध्यायः ।

अथ मूढगर्भचिकित्सा ।

आत्रेय उवाच ।

विरुद्धाहारसेवाभिस्तथा गर्भव्यथासु च ।
अतिमूर्द्धनपीड़ायाः पीड़ां प्राप्नोति चार्भकः ॥
तिर्य्यग्वापि च गर्भस्य त्यक्त्वा द्वारं भगस्य च ।
अन्यद्वा म्रियतेऽपत्यं तेन कष्टं प्रपद्यते ॥
अथवा लज्जया स्त्रीणां सङ्कोचात् सङ्कुचिते भगे ।
मूढ़गर्भञ्च जानीयात् तस्य वक्ष्यामि लक्षणम् ॥
वस्तिशूलञ्च भवति योनिद्वारं निरुन्धति ।
गर्जते जठरं यस्या आध्मानञ्चैव जायते ॥
तोदनं चाङ्गभङ्गञ्च निद्राभङ्गञ्च जायते ।
वाताद्भवति गर्भस्य संरोधो भिषगुत्तम ! ॥
शूलं ज्वरस्त्रिदोषश्च तृष्णा दोषो भ्रमस्तथा ।
मूत्रकृच्छ्रं शिरोऽर्त्तिः स्यात् पित्ताद्रोधो भ्रूणस्य च ॥
आलस्यतन्द्रा निद्रा च जाड्याध्मानश्च वेपथुः ।
कासो विरसता चास्ये श्लेष्मणा मूढ़गर्भके ।
द्वन्द्वैश्च द्वन्द्वजं विद्यात् सर्वैः स्यात् सान्निपातिकम् ॥

अथ मृतगर्भस्य लक्षणम् ।

भ्रममूर्च्छातृषाध्मानं वातरोधश्च विह्वलम् ।
मूर्च्छावमिं सपाकञ्च दीनत्वमुपगच्छति ॥
मृतगर्भं विजानीयादाशुकारी स्त्रियामपि ।
अतो वक्ष्यामि भेषज्यं महामोहे विशारद ! ॥
वातिके मर्दनाभ्यङ्गं स्वेदनं वाष्पमेव च ।
यवागुं पञ्चकोलञ्च पाययेद्भिषगुत्तमः ॥
पैत्तिके शीतलं पानं शीतान्नसहितानि च ।

व्यञ्जनानि तथा तस्य यष्टिकं पयसा पिबेत् ॥
त्रिकटु त्रिफला कुष्ठं रोध्रं वत्सकधातुकी ।
सगुड़ं क्वथितं पाने श्लेष्मणा मूढ़गर्भके ॥
मूर्वाचिञ्चावास्तुकर्णीमञ्जिष्ठारोध्रनीलिकाः ।
कर्कन्धुमूलं सौराष्ट्री क्वाथस्य सगुड़ो हितः ॥
रक्तपित्तविकारेषु कुक्षिशुद्धिश्च जायते ।
मृतगर्भस्य वच्यामि भेषजं भिषजां वर ! ॥
मर्दयित्वा मानुषीञ्च ततश्चापि प्रयत्नतः ।
निराहाराच्च म्रियते यदि गर्भोऽन्तरे स्त्रियः ॥
तदा शस्त्रप्रतीकारं भेषजानि शृणुष्व मे ।

नाभिविलग्नयाञ्च सुकुण्डलिकां कृत्वा तु तस्योपरि मूढ़गर्भामुपवेश्य जानुनी प्रसार्य्य किञ्चित् पृष्ठभागे साधारणवष्टभ्य उदरादधोऽवतारयेत्। योनिद्वारे प्रगलति तिललेन वारिणा अभ्यज्य हस्तो याति योनिद्वारञ्च तस्मात् जन्याङ्गुष्ठेन गलप्रदेशे धृत्वा निःसारयेत्। अथवार्द्धचन्द्रेण स्त्रेणैव मृतगर्भस्य बाहुयुगलं सञ्छिद्य बाहू निःसारयेत्।

अथ प्रसवोपायमन्त्रौषधानि ।

लाङ्गल्या मूलेन उष्णेन वारिणा यो योषितां नाभिलेपनेन शीघ्रं गर्भो जायते प्रसूयते च। वलामूलं सूर्य्यकान्तिमवल्लीकानि कञ्जलेन पिष्ट्वा लेपनं कुर्य्यात्।

अथ सुखप्रसवः ।

शीरभूनिम्बवार्त्ताकीमूलञ्च पिप्पलीयकम् ।
यवान्युग्रवचाः पिष्ट्वा तथा चोष्णेन वारिणा ॥
नाभिदेशादधस्ताच्च प्रलेपेन प्रसूयते ।
मूलञ्च लाङ्गलिक्याश्च देवदाल्याश्च तुम्बिका ॥

कोशातक्यादिकं सर्वं लेपने परिकल्पितम्।
सूतिलेपाः स्त्रियो ह्येते सुखेनैव प्रसूयते॥

अथ मन्त्रः।

हिमवदुत्तरे कूले सुरसा नाम राक्षसी।
तस्या नूपुरशब्देन विशल्या गुर्विणी भवेत्॥

ऐं क्लीं भगवति भगमालिनि चल चल भ्रामय पुष्पं विकाशय विकाशय स्वाहा। श्रीं नमो भगवते मकरकेतवे पुष्पधन्वाय प्रतिचालितसकलसुरासुरचित्ताय युवतिभगवासिने क्लीं गर्भं चालय चालय स्वाहा। एभिर्मन्त्रितं पयः पाययेत् तेन सुखप्रसवः।

अथ यन्त्रः।

ऐं क्रां क्रीं क्रूं क्रैं क्रों क्रौं क्रः। इदं यन्त्रमाढ़कस्योर्द्ध्वभागे लिखित्वा मूढ़गर्भायै दर्शयेत् शय्यातले च स्थापयेत् तेन सुखेन प्रसवः।

इति यन्त्रः।

गङ्गातीरे वसेत् काकी चरते च हिमालये।
तस्याः पक्षच्युतं तोयं पाययेच्च ततःक्षणात्॥
ततो प्रसूयते नारी काकरुद्रवचो यथा।
अनेन व्याकुलो दूतो भवेत् तावच्च पाययेत्
तेन प्रसूयते नारी गृहे काकसुखेन च॥

इति श्रीमदात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने मूढ़गर्भचिकित्सा नाम एकपञ्चाशत्तमोऽध्यायः।



## द्विपञ्चाशत्तमोऽध्यायः ।

अथ सूतिकोपचारः ।

आत्रेय उवाच ।

प्रसूत्यनन्तरं रोध्रार्जुनकदम्बदेवदारुबीजकाष्ठं कर्कन्धूश्च ालाभं लोहितविशुद्धये स्नापयेत् । प्रसूतिजाता योनिः ोध्यते । तैलेनापूर्य्याभ्यज्य चोष्णेन वारिणा स्वेदयेत् । ्वासमेकं कृत्वा द्वितीये दिवसे गुड़नागरहरीतकीश्च पयेत् । ग्रामद्वयादूर्द्ध्वं कुलत्थयूषं वा सोष्णं पाययेत् । ीयदिवसे पञ्चकोलयवागूर्दापयेत् । चतुर्थे चातुर्जातक- ाश्रा यवागूर्दापयेत् । पञ्चमेऽहनि शालिषष्टिकौदनं भोज- त् । अनेन क्रमेण दशपञ्चदशाहं च उपचारयेत् ।

अथ क्षीरवृद्धिकारणम् ।

पिप्पलीपिप्पलीमूलं नागरं घनवालुकम् ।
कुस्तुम्बुरूणि मञ्जिष्ठां सह क्षीरेण कल्कयेत् ॥
पानं क्षीरविशुद्ध्यर्थं कल्कमश्नात्यनन्तरम् ।
मरिचं पिप्पलीमूलं क्षीरं क्षीरविवृद्धये ॥
मागधी नागरी पथ्या गुडेन सघृतं पयः ।
पानं जनयते क्षीरं क्षीणाश्च क्षीरपानतः ॥
एवं कृत्वा च नारीणां द्वादशाहे भिषग्वरः ।
माङ्गल्यं वाचनं कृत्वा योषार्थश्च प्रदर्शयेत् ॥
जातके सुतमोचश्च द्वादशाहं तथा पुनः ।
नामकर्मकृतौ सत्यां कर्णवेधनमेव च ॥
वस्त्रबन्धं विवाहश्च कारयेद् बालकस्य च ।

इति श्रीमद्आत्रेयभाषिते हारीतोत्तरे तृतीयस्थाने सूतिकोपचारो नाम द्विपञ्चाशत्तमोऽध्यायः ।

---

## त्रिपञ्चाशत्तमोऽध्यायः ।

अथ बालचिकित्सा ।

आत्रेय उवाच ।

पञ्चैव क्षीरदोषाश्च स्त्रीणाञ्च कथिता बुधैः ।
घनक्षीरोष्णक्षीराम्लक्षीरा चैव तथापरा ॥
अल्पक्षीरा मृदुक्षीरा क्षारक्षीरा तथापरा ।
मृदुक्षीरा भवेत् सौख्या पञ्चान्या दोषकारकाः ॥
घनाध्मानविरोधत्वं श्वासकासादिसम्भवः ।
उत्फुल्लकुक्षितावंक्षिघनक्षीरस्य सेवनात् ॥
अल्पमलः कृशो दीनः श्वासातिसारपीड़ितः ।
अल्पक्षीरस्य दोषेण सम्भवेद्धतवाक् सुतः ॥
ज्वरः शोपस्तथाल्पत्वमुष्णक्षीरेण बालके ।
तथैव चोष्णक्षीरेण ज्वरातिसार एव च ॥
सुखञ्च बलमाप्नोति चारोग्यं लभते शिशुः ।
मृदुक्षीरेण नियतं जायते रूपवानपि ॥
चक्षूरोगश्च कण्डूश्च क्षतश्लेष्मावशूलिता ।
मंक्लेदयुक्तं नासास्यं जायते क्षारदुग्धके ॥
अतो वक्ष्यामि भैषज्यं शृणु हारीत ! मे मतम् ।
आध्मानात् फुल्लकुक्षिश्च श्वासदोषादिपीड़ितः ॥
उत्फुल्लिका च विज्ञेया बालानां दुःखकारिणी ।
उदरे च जलौकादिरक्तं चादौ विमोचयेत् ॥
उत्फुल्लिदोषे दातव्यं क्षीरदोषनिवारणम् ।
अग्निना प्रबलः स्वेदो दहेद्वापि शलाकया ॥
जठरे विन्दुकाकारा जायन्ते भिषगुत्तम ! ।
बिल्वमूलफलं पाठा त्रिकटुर्बृहतीद्वयम् ॥
क्वाथश्च गुड़युक्तश्च बालानाञ्च ज्वरे हितः ।

स्त्रीणां स्यात् पानमेतेषां बालानां ज्वरनाशनम्।

इति उत्फुल्लिकाचिकित्सा।

हितः पर्पटकक्काथः शर्करामधुयोजितः।
बालानां ज्वरनाशाय कैरातं मधुसंयुतम्॥
भार्गी रास्ना कर्कटकं चूर्णं वा मधुसंयुतम्।
लेहो वा बालकस्यापि श्वासकासनिवारणः॥
पथ्यावचानागरकं घनं कर्कटमेव च।
चूर्णं सगुड़मेवं हि बालानां कासनाशनम्॥
पलाशभेदं त्रिफलात्रपुसीवरिमागधीः।
पिष्टा तण्डुलतोयेन सिताढ्यं मूत्ररोधजित्॥
नागरीं चाभयां दन्तीं गुड़चूर्णं प्रदापयेत्।
बालानां विद्रधिञ्चैव नाशयेच्च न संशयः॥
पाठाविल्वशिलादीनि वल्ककं शाल्मलीत्वचम्।
दुग्धेन पानं बालानामतिसारनिवारणम्॥
अर्जुनश्च कदम्बश्च कुष्ठं गैरिकमेव च।
त्वग्दोषाणां लेपनश्च वारणं बालकस्य च॥
रोध्रं रसाञ्जनं धात्री गैरिकं मधुना युतम्।
अञ्जनं चैव बालानां नेत्ररोगनिवारणम्॥

अथ बालानां प्रज्ञाकरणम्।

वचा ब्राह्मी च मण्डूकी घनकुष्ठं सनागरम्।
प्रातर्देयं घृतेनैव बालानां पुष्टिकारकम्॥
गुडूचिकापामार्गश्च विड़ङ्गं शङ्खपुष्पिका।
विष्णुक्रान्ता वचा पथ्या नागरञ्च शतावरी॥
चूर्णं घृतेन संमिश्रं पिबतो धीः प्रवर्त्तते।
त्रिभिर्दिनैः सहस्रैकं श्लोकानामवधारयेत्॥

इति बालानां प्रज्ञाकरणम्।

अथ बालानां वाचाकरणम्।

त्रिकटु त्रिफला धन्या यवानी तालमूलिका।
वचा ब्राह्मी तथा भार्गी चूर्णश्च मधुना हितम्॥
वाक्पटुत्वञ्च बालानां नादो वीणासमस्वरः॥

अथ बालानामपस्मारचिकित्सा।

यस्य श्वासो विचैतन्यं तन्द्रा चातीव वेपथुः।
शिरोऽर्त्तिः सज्वरश्चैव स चासाध्यो भिषग्वर!॥
लालाप्रवृत्तिर्बालस्य तथा विभ्रान्तलोचनम्।
स्तब्धाङ्गविकृतिर्यस्य चापस्मारो स उच्यते॥
अपस्मारे तु बालस्य शीतलानि प्रयोजयेत्।
वचा सैन्धवपिप्पल्यो नस्यं हि गुड़नागरः॥
रसं चागस्तिपत्रस्य मरिचैः प्रतियोजितम्।
एतेन प्रतिसौख्यं स्यात् तदा चान्दोलनं हितम्।
मस्तकान्ते ललाटे च दहेल्लोहशलाकया॥

अथ बालानां पूतनादोषः।

शून्यागारे देवकुले श्मशाने देवमध्यगे।
चत्वरे सङ्गमे नद्योर्भयक्षुभितबालके॥
संक्रामन्ति भिषक्श्रेष्ठ! बालकस्यापि पूतनाः।
लोहिता रेवती ध्वाङ्क्षी कुमारी शाकुनी शिवा॥
ऊर्द्ध्वकेशी तथा सेना अष्टौ चैताः प्रकीर्त्तिताः।
तथान्या मासजातस्य नामानि शृणु साम्प्रतम्॥
रोहिणी विजया काली कृत्तिका डाकिनी निशा।
भूतकेशी कृशाङ्गी च अष्टौ चैताः प्रकीर्त्तिताः॥
लक्षणञ्च प्रवक्ष्यामि शृणु पूजावलिक्रमम्।
जातमात्रस्य बालस्य लोहिता नाम पूतना॥
विस्रगन्धा लोहिता च रोदित्येव मुहुर्मुहुः।

बलिं तस्याः प्रवक्ष्यामि येन सौख्यं प्रजायते ॥
द्वितीये दिवसे बालं रेवती नाम पूतना।
गृह्णाति लक्षणं तस्य रोदिति कम्पते भृशम् ॥
कृष्णमृण्मयीं प्रतिमां कृत्वा गन्धानुलेपनैः।
कृशरारालचूर्णैश्च दीपधूपैस्तथाक्षतैः ॥
ताम्बूलैः कृष्णसूत्रैश्च रात्रौ नैरृतिके क्षिपेत्।
तृतीये दिवसे प्राप्ते वायसी नाम पूतना ॥
तया गृहीतमात्रेण रोदिति न पिबेत् स्तनम्।
ज्वरश्चैवातिसारश्च काकवद्वदते भृशम् ॥
तस्या दध्योदनं पात्रे यवकृशरपोलिकाः।
ध्वजाभिः सगुडश्चैव कृष्णगन्धानुलेपनम् ॥
धूपदीपाक्षतैश्चैव मध्याह्ने बलिमाहरेत्।
चतुर्थे दिवसे बालं कुमारी नाम पूतना ॥
गृह्णाति बालकस्तेन ज्वरेण परितप्यते।
शून्यं विगाहते बालस्तन्मुखं परिशुष्यति ॥
कृशं स रोदिति तस्याः शृणु पूजाबलिक्रमम्।
पायसं सघृतं खण्डं घृतस्य दीपकत्रयम् ॥
मृण्मयीं प्रतिमां कृत्वा पुष्पधूपाक्षतैरपि।
कृतान्तदिशि मध्याह्ने बलिं दत्त्वा सुखी भवेत् ॥
पञ्चमे दिवसे बालं शाकुनी नाम पूतना।
गृह्णाति स तयाक्रान्त स्तन्यं नाकर्षते शिशुः ॥
सज्वरो वमते रौति कासमानोऽथ वेपते।
तस्याः शोभनिका पूजा क्रियते तिललड्डुकैः ॥
श्वेतगन्धाक्षतैर्धूपैः पूजयेन्मृण्मयाकृतिम्।
उत्तराशां समाश्रित्य पूर्वाह्णे बलिमाहरेत् ॥
षष्ठे च दिवसे प्राप्ते शिवा नाम कुमारिका।

रौति निःश्वसिति तेन वमते कम्पते तथा ॥
स्तन्यञ्च नाहरेद् बालो ज्वरातिसारपीड़ितः।
तस्यै वलिः प्रदेयश्च सप्तव्रीहिमयश्चरुः ॥
पायसैर्दधिदीपैश्च पूज्या सा तिलचूर्णकैः।
गन्धपुष्पाक्षतैर्धूपैः पूजयेन्मृण्मयाकृतिम् ॥
ऐशानीं दिशमाश्रित्यापराह्णे वलिमाहरेत्।
सप्तमेऽह्नि पूतनाया ऊर्द्धकेश्याः शिशौ तथा ॥
पूर्ववद् दृश्यते चिह्नं तथैव वलिमाहरेत्।
अष्टमे दिवसे प्राप्ते सेना नाम च पूतना ॥
तया गृहीतः श्वसिति हस्तौ कम्पयते भृशम्।
तस्यै दध्योदनं दद्यात् तिलचूर्णञ्च पोलिकाम् ॥
धूपदीपगन्धपुष्पताम्बूलान्यक्षतानि च।
आग्नेयीं दिशमाश्रित्य प्रदोषे वलिमाहरेत्।
एवं क्रमेण मासस्य वर्षस्य वलिकर्म च ॥

इति श्रीमहर्ष्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने बालचिकित्सा नाम त्रिपञ्चाशत्तमोऽध्यायः।

---

## चतुःपञ्चाशत्तमोऽध्यायः।

अथ भूतविद्या।

आत्रेय उवाच।

शून्ये देवकुले श्मशानफलके वीथीप्रतोलीतले।
रथ्याकारविहारशून्यनगरे चारामके चत्वरे ॥
जायन्ते क्षुभिते वलानि हृदये क्षुद्रग्रहाणां नरे।
ते चापि प्रथिता ग्रहा दशविधा वक्ष्यामतः साम्प्रतम् ॥
दश प्रोक्ता महाचार्य्यैः कैश्चिदप्येकविंशतिः।
दशग्रहाणां वक्ष्यामि चिकित्सां शृणु पुत्रक ! ॥

ऐन्द्राग्नेयौ यमश्चान्यो नैरृतो वरुणो ग्रहः।
मरुतोऽपि कुबेरश्च ऐशान्यो ग्रहको ग्रहः॥
पैशाचिको ग्रहश्चान्यो दशैते ग्रहनायकाः।
आरामे च विहारे च देवस्थाने च यो भवेत्॥
ऐन्द्रग्रहं विजानीयात् तेन हर्षति गायति।
सदर्पश्चासदर्पश्च उन्मादग्रस्त एव च।
श्मशाने चत्वरे चैव गृह्णात्याग्नेयकुग्रहः॥
तेनैव रोदित्यत्यर्थं भयं सर्वत्र पश्यति।
युद्धभूमौ श्मशाने च यमश्चापि उदीर्य्यते॥
दीनश्च विह्वलस्तेन प्रेतवच्चेष्टते नरः।
वल्मीकचत्वरे चैत्ये गृह्णाति नैरृतो ग्रहः॥
तेनासौ वर्त्तते द्वेष्टि धावते मारयत्यपि।
दृष्टनेत्रो विवर्णास्यो बलिष्ठो दुष्टचेतनः॥
नदीतड़ागतीरे च छलते वारुणग्रहः।
तेनास्यात् स्रवते लाला भृशं मूत्रयते नरः॥
नेत्रस्रावश्च दृश्येत मूकवत् प्रविलोकयते।
वातमण्डलमध्ये च गृह्णाति मारुतग्रहः॥
तेनास्यं शोषयेद्दीनः कम्पते वाथ रोदिति।
विह्वलः श्रान्तनेत्रश्च निषीदति क्षुधातुरः॥
हर्षगर्वाभिमाने च गृह्णाति यक्षराड् ग्रहः।
तेन गर्वोद्धतश्चैव तथालङ्करणप्रियः॥
देवस्थाने च रम्ये च शिवग्रहश्छलप्रदः।
भस्माङ्गरागं कुरुते भ्रमते च दिगम्बरः॥
शिवध्यानरतो नित्यं गीतवाद्यप्रियस्तु सः।
शून्यागारे शून्यकूपे ग्रहको ग्रहनामकः॥
क्षुधार्त्तो न तृषार्त्तश्च क्रथते न शृणोति च।

उच्छिष्टे वाशुची यस्य छलते स पिशाचकः ॥
तेन नृत्यति वा रौति गायत्येवाथ जल्पति ।
मत्तवद्भ्रमते नग्नो लालास्रावः क्षुधातुरः ॥
एवं दशग्रहाणाञ्च लक्षणं कथितं मया ।
वक्ष्याम्यतः प्रतीकारं शृणु पुत्र ! समासतः ॥
जलस्नानं सातिशयं तथा च बलिकर्म च ।
पूजां यथा वाच्यमानां तेन संलभते सुखम् ॥
एलाजातिफलं मधूकयुगलं रास्ना तथा खादिरः ।
कर्पूरा मलकीजटाबहुसुतावोण्टाम्लसारास्तथा ॥
सीसं पारदसारदाड़िमफलं मद्यैश्च संमीलितम् ।
प्रत्येकं दधिदुग्धजाङ्गलरसैर्युक्तं समं कल्कितम् ॥
रसेन भावितं तस्य गुटिका च प्रकल्पिता ।
जयेच्चन्द्रप्रभा नाम तीव्रान् मोहादिकान् गदान् ॥
शुण्ठी मधुकसारश्च चवी किंशुकमेव च ।
वचाहिङ्गुसमायुक्तं वस्तमूत्रेण संयुतम् ।
देयं ग्रहविकारघ्नं ग्रहाणां नाशनं परम् ॥
विड़ालविष्ठाहिलमोचनिम्बमयूरपिच्छं समराजिका च ।
निर्माल्यपिण्डीतकसर्जमोचधूपं घृताक्तं ग्रहदोषशान्त्यै ॥
चेतना नाम गुटिका तथा ब्राह्मीघृतं स्मृतम् ।
यान्युक्तानि त्वपस्मारे तानि चात्र प्रयोजयेत् ॥
गुग्गुलुं मधुना साज्यं तेन धूपेन धूपयेत् ।
मन्त्रेण तेन हारीत ! तर्जयेद् ग्रहपीड़ितम् ॥

अथ भूतेश्वरमन्त्रः ।

ओँ नमो भगवते भूतेश्वराय कलिनखाय रौद्रदंष्ट्रकराल-वक्त्राय त्रिनयनधग्धगितपिशङ्गललाटनेत्राय तीव्रकोपानलाय अमिततेजसे पाशशूलखड्गखट्टाङ्गडमरुधनुर्बाणमुद्गरदण्डप्रास-

धराय कपिलजटाजूटार्द्धचन्द्रधारिणे भस्मरागरञ्जितविग्रहाय उग्रफणिकालकूटाटोपमण्डितकण्ठदेशाय जय जय भूतनाथाय अमरात्मने रूपं दर्शय दर्शय नृत्य नृत्य चल चल पाशेन बन्ध बन्ध हुङ्कारेण त्रासय त्रासय वज्रदण्डेन हन हन निशितखड्गेन छिन्न छिन्न शूलाग्रेण भिन्न भिन्न मुद्गरेण चूर्णय चूर्णय सर्वग्रहाणामावेशं नाशय नाशय स्वाहा।

अथावेशनमन्त्रः।

ग्रहाविष्टेन चेत् तस्मै दीयते बलिरुत्तमः।
मुक्तो भवति तस्माच्च संशयो नास्ति तत्र च॥

इति श्रीमहर्षिआत्रेयभाषिते हारीतोत्तरे तृतीयस्थाने भूतविद्या नाम चतुःपञ्चाशत्तमोऽध्यायः।

---

## पञ्चपञ्चाशत्तमोऽध्यायः।

अथ विषतन्त्रम्।

आत्रेय उवाच।

द्विविधं विषमुद्दिष्टं स्थावरं जङ्गमं तथा।
शृङ्गिको वत्सनाभश्च तथाच शाङ्गवेरिकः॥
दारकः कालकूटश्च शङ्खः स्यात् सत्तुकन्दुकः।
हालाहलश्चाष्टमश्च तथाष्टौ विषजातयः॥
शृङ्गिकः कृष्णवर्णश्च वत्सनाभश्च पीतकः।
शुण्ठीसमानवर्णश्च शाङ्गवेरः स उच्यते॥
दारको हरिवर्णश्च कालकूटो मधुप्रभः।
शङ्खश्चातिविषाभासः पीताभः सत्तुकन्दुकः॥
हालाहलः कृष्णवर्णश्चाष्टौ च जातयस्तथा।
पीतविषं नरं दृष्ट्वा सद्यो वमनमुत्तमम्॥
यावत् पीतं विषञ्चैव तावत्तु वमयेत् सदा।

सिञ्चेत् शीताम्भसा वक्त्रं मन्त्रपूतेन सत्वरम् ॥

अथ मुखसिञ्चनमन्त्रः ।

ओं हर हर नीलकण्ठ अमृतं प्लावय प्लावय हुङ्कारेण विषं ग्रस ग्रस क्लीङ्कारेण हर हर ह्रीङ्कारेण अमृतं प्लावय प्लावय हर हर नास्ति विष उच्छिरे उच्छिरे ।

अथ कर्णे जपमन्त्रः ।

ओं नमो हर हर नीलग्रीव ! श्वेताङ्गसङ्गतजटाग्रमण्डित ! खण्डेन्दुस्फूर्त्तितमन्त्ररूप ! आगच्छ विषमुपसंहर हर हर हर नास्ति विषं नास्ति विषं नास्ति विषं उच्छिरे उच्छिरे उच्छिरे इति कर्णे जपमन्त्रेण वारंवारं तालुमुखं सिञ्चेत् शीतवारिणा ।

अथ विषशमनौषधानि ।

तण्डुलीयकमूलानि पिष्ट्वा चोष्णेन वारिणा ।
पीतं पीतविषं हन्ति वमनैर्लाघवं भवेत् ॥
काकजङ्घा सहचरीमूलं चेड़गजस्य च ।
कटरं कार्मुकस्यापि त्वचं पीत्वोष्णवारिणा ॥
पीतं तच्च विषं घोरं नाशयत्याशुसंशयः ।
खदिरस्य च मूलञ्च तथा निम्बफलानि च ॥
उष्णोदकेन पीतानि जयेयुस्तत्क्षणात् विषम् ॥
वत्साह्वञ्चाश्वगन्धाञ्च पीत्वा चोष्णेन वारिणा ।
प्रपीतञ्च विषं पाति नरस्य चाशु वेदवाक् ॥
अथ प्रधानरक्तस्य क्षते रक्तं विषस्य च ।
तस्य वक्ष्यामि भैषज्यं येन सम्पद्यते सुखम् ॥
मर्मस्थाने मर्मगतं तमसाध्यं भवेन्मृतम् ।
त्वग्रक्तस्थन्तु साध्यं तत् मांसस्थं कष्टसाध्यकम् ॥
असाध्यं धातुसम्प्राप्तं सम्यक् वक्ष्यामि भेषजम् ।

विषलिप्तं नरं ज्ञात्वा ततः कुर्य्यात् प्रतिक्रियाम्॥
रजनीयुग्मकाम्लेन काञ्जिकेन तु पेषितम्।
लेपेन च विषं हन्ति प्रलिप्तं नात्र संशयः॥
मातुलुङ्गरसेनापि धावनं काञ्जिकेन वा।
अतिशीतेन तोयेन प्रलिप्तं नात्र संशयः॥

इति स्थावरविषचिकित्सा।

अथ जङ्गमविषचिकित्सा।

विषं जङ्गममित्युक्तमष्टधा भिषगुत्तम!।
दार्वीकरा मण्डलिनो राजिमन्तश्च गुण्डसाः॥
वृश्चिको गोरकश्चापि तथाच खण्डविन्दुकः।
अलर्कमूषमार्जारविषं प्रोक्तमनेकधा॥
दर्वीकराणां सर्वेषामुक्तं वातात्मकं विषम्।
मण्डलिनाञ्च सर्वेषां पैत्तिकं विषमुच्यते।
राजिमन्तश्च ये प्रोक्तास्तेऽपि ज्ञेयाः कफात्मकाः॥
विचित्रगमनं मूर्च्छा: पीड़नं चातिदुर्भरम्।
हृदये व्यथनं यस्य तमसाध्यं वदन्ति च॥
नासारक्तस्रुतिर्यस्य नेत्रे स्रावश्च दृश्यते।
जड़ा च जायते जिह्वा तमसाध्यं विदुर्बुधाः॥
यस्य लोमानि शीर्य्यन्ते पीताभं शरीरं भवेत्।
न स्थिरं मस्तकं यस्य तमसाध्यं भिषग्वर!॥
एभिर्विरहितं दृष्ट्वा कुर्य्यात्तस्य प्रतिक्रियाम्।

ओं नमो भवगते सुग्रीवाय सकलविषोपद्रवशमनाय उग्रकालकूटविषकवलिने विषं बन्ध बन्ध हर हर भगवतो नीलकण्ठस्य आज्ञा।

इति विषबन्धनमन्त्रः।

ओं नमो हर हर विषं संहर संहर अमृतं प्लावय प्लावय नासि शरीरे विष ! नीलपर्वतं गच्छ गच्छ नास्ति विषम् ओं स्वाहा उचिरे उचिरे उचिरे अनेन मन्त्रेण मुखमुदकेन त्रासयेत् ओं नमोऽरेरे हंस अमृतं पश्य पश्य ।

जया कूटं वचाकुष्ठं सैन्धवं मगधा निशा ।
लेपो दुष्टव्रणे प्रोक्तो विषं हन्ति सुदारुणम् ॥
सुरसा रजनी व्योषं यवानी पारिभद्रकम् ।
सर्पदुष्टव्रणे प्रोक्तं लेपनं विषशान्तये ॥
कुष्ठं मुस्ता अजाजी च विडङ्गं मधुयष्टिका ।
गुञ्जामूलं शीततोयैर्लेपो मण्डलिनां हितः ॥
राजिमतां विषे चैव गृहधूमं वचाघनम् ।
सर्षपाश्च यवानी च पिचुमर्दफलत्रयम् ॥
एभिश्च लेपनं कार्य्यं व्रणतैलेन संयुतम् ॥

इति राजिमतां लेपः ।

शठीकिरातं सकटुत्रयञ्च वचाविशालापिचुमर्दकञ्च ।
पथ्यायवानीरजनीद्वयञ्च दुष्टव्रणे लेपनमेव शस्तम् ॥
स्थावरं जङ्गमं वापि विषं जग्धं भिषग्वर ! ।
शीघ्रं दद्याद् व्यथां गुर्वीं प्रोक्तञ्च नरसत्तमैः ॥

ओं नमो भगवते शिरसि चन्द्रशेखराय अमृतधाराधौतसकलविग्रहाय अमृतकुम्भेन प्लावय प्लावय स्वाहा ।

इति श्रीमदात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने विषतन्त्रं नाम पञ्चपञ्चाशत्तमोऽध्यायः ।

---

## षट्पञ्चाशत्तमोऽध्यायः।

अथ भिन्नचिकित्सा।

आत्रेय उवाच।

छिन्नं भिन्नं तथा भग्नं घृष्टं पिष्टं तथैव च।
आस्फालितं सम्प्रहारः सङ्घातः कथ्यते बुधैः॥
शस्त्रभिन्नं नरं दृष्ट्वा कर्त्तव्या च प्रतिक्रिया।
अस्थिस्थं भिद्यते मांसमस्थि संछिद्यते यदि॥
शाखाप्रशाखयोर्वापि छिन्नं तच्च निगद्यते।
असन्धौ परिसंच्छिन्नं तदसाध्यं विनिर्दिशेत्॥
खड्गार्द्धचन्द्रपरशुच्छिन्नन्तु कथितं सदा।
तस्यादौ चारणालेन धावनं परिकीर्त्तितम्॥
पिचुना तिलतैलेन शीघ्रं संस्वेदनान्वितम्।
यावद्धै स्रवते रक्तं तावत् तैलेन चाभ्यजेत्॥
रक्ते वै विकृतिं प्राप्ते तैलेनाभ्यञ्जनं मतम्।
शोफाद्याश्च प्रजायन्ते बहुलोपद्रवा व्रणे॥
सन्धौ छिन्नं नरं दृष्ट्वा सेचयेत् तप्तवारिणा।
सन्धितस्य व्रणस्यापि प्रशस्तं पिचुतैलकम्॥
पूये वापि विनिर्याति निम्बारग्वधपत्रकम्।
गुड़ेन पथ्यां पिष्ट्वा च लेपनं पूयशोधनम्।
दिनत्रये विशुद्धेऽपि तत्रैव लेपनं हितम्॥
धवार्जुनकदम्बस्य प्लक्षोडुम्बरयोस्त्वचम्।
जलेन पिष्ट्वा लेपश्च तेन संरोहते व्रणः॥

इति छिन्नचिकित्सा।

अथ भिन्नचिकित्सा।

शक्तिशूलैश्च वाणैश्च भल्लास्त्रखड्गतोमरैः।
क्षुरिकामुखधाराभिर्भिन्नं तत् कथ्यते बुधैः॥

साध्यममर्मजं प्रोक्तं मर्मस्थं तन्न सिध्यति ।
अपामार्गरसेनापि तथा कूष्माण्डकेन च ॥
धावनं काञ्जिकेनापि प्रशस्तं कथ्यते बुधैः ।
तिलतैलेन चाभ्यङ्गो हितः स्यादस्थिभिन्नके ॥
लेपनञ्च प्रयोक्तव्यं पूर्वोक्तञ्चैव पुत्रक ! ॥

अथ शल्योद्धारचिकित्सा ।

उरसि शिरसि शङ्खे कक्षयोः पादयोर्वा
त्रिकजठरमुखाग्रे नेत्रयोः कर्णयोर्वा ।
भवति हि यदि शल्यं कष्टसाध्यञ्च शस्त्रै-
र्भवति यदि च गूढं भेषजैस्तच्च साध्यम् ॥
शाखाप्रशाखयोर्यच्च मर्मस्थं तन्न सिध्यति ।
यन्त्रशस्त्रप्रतीकारैः शल्यं प्राज्ञः समुद्धरेत् ॥
द्वादशैव तु यन्त्राणि शस्त्राणि द्वादशैव तु ।
चत्वारि च प्रबन्धानां शल्योद्धारे विनिर्दिशेत् ॥
गोधामुखं वज्रमुखं त्रिवक्त्रं सन्दंशचक्राकृतिकङ्कपादम् ।
अथानकं शृङ्गककुण्डलञ्च श्रीवत्ससौवस्तिकपञ्चवक्त्रम् ॥
द्वादशैतानि यन्त्राणि कथितानि भिषग्वरैः ।
अथ शस्त्राणि प्रोक्तानि नामानि च पृथक् पृथक् ॥
अर्द्धचन्द्रं व्रीहिमुखं कङ्कपत्रं कुठारिका ।
करवीरकपत्रञ्च शलाकाकारपत्रकम् ॥
वडिशं गृध्रपादञ्च शूली च सूचिमुद्गरम् ।
शस्त्राण्येतानि प्रोक्तानि शल्योद्धारे पृथक् पृथक् ॥
अतिगुप्तञ्च शल्यञ्च सन्दंशेन समुद्धरेत् ।
भिन्नेन तत्प्रतीकारः कर्त्तव्यश्च सुधीमता ॥
गम्भीरशल्यं ज्ञात्वा च प्रतीकारञ्च कारयेत् ।
छादनं कङ्कपत्रेण चोद्धरेत् वडिशेन च ॥

भिन्नवच्च प्रतीकारः कर्त्तव्यश्च सुधीमता।
यत्र शोथो भवेत् तीव्रस्तत्र शल्यं विनश्यति॥
सशल्यं सघनञ्चैव रुजावन्तं निरूप्य च।
तत्र योग्यश्च यन्त्रश्च यन्त्रशस्त्रञ्च योग्यकम्।
तत् तत्र योजनीयञ्च ऊहापोहविशारदैः॥
या वेदना शल्यनिपातजाता तीव्रा शरीरे प्रतनोति जन्तोः।
घृतेन संशान्तिमुपैति तिक्ता कोष्णेन यष्टीमधुनान्वितेन॥
सर्जार्जुनोडुम्बरमर्कटीनां रोध्रं समङ्गासुरसासमेतम्;
जलेन पिष्ट्वा प्रतिलेपनाय शल्योद्धृतौ सौख्यमिदं करोति॥
शेषा क्रिया च पूर्वोक्ता छिन्ने भिन्ने हिता तु या।
कर्त्तव्यो वालुकास्वेदो घटीस्वेदश्च तत्र च॥

अथ भग्नचिकित्सा।

भग्नास्थिकञ्च नरं दृष्ट्वा तस्य वक्ष्यामि भेषजम्।
मणिबन्धे कूर्परे च जानौ भग्ने कटौ तथा॥
पृष्ठवंशे विभग्ने च साध्यान्येतानि सत्तम!।
ग्रीवादेशे चेन्द्रवस्तौ रोहिण्यां कूर्परादधः॥
स्कन्धकूर्परमध्ये च तथाच त्रिकमध्यतः।
उरसि क्रोड़के चैव विभग्नं तदसाध्यकम्॥
विभग्नञ्च नरं दृष्ट्वा वेणुखण्डेन बन्धयेत्।
म्रक्षयेन्नवनीतेनैरण्डपत्रैश्च वेष्टयेत्॥
उष्णाम्भसा सेचयेच्च वस्त्रेण मृदु बन्धयेत्।
धवार्जुनकदम्बानां वल्कलं काञ्जिकेन तु॥
पिष्ट्वा हितः प्रलेपश्च तेन सौख्यं प्रजायते।
स्वेदयेत् तानि चोष्णेन आवासं कारयेत् पुनः॥
एवं क्रियासमाप्तौ ततो बन्धं विमोचयेत्।
ए काष्ठान्तरितेनापि पूर्ववत् तत् प्रबन्धयेत्।

यावद् ग्रन्थिं न बध्नाति तावन्न स्नापयेन्नरम् ॥

अथ घृष्टचिकित्सा ।

घृष्टञ्चैव नरं दृष्ट्वा धावनं काञ्जिकेन च ।
मूत्रेण शीततोयेन धावनञ्च हितं मतम् ॥
यावद्वै स्रवते रक्तं तावत् तैलेन सेचयेत् ।
अल्पानि चौषधान्यत्र कारयेद्विविधानि च ॥

अथ आस्फालितचिकित्सा ।

रक्तस्रावे विपाके च स्वेदनञ्च विधीयते ।
भग्नवच्च प्रतीकारं कारयेद्विधिपूर्वकम् ॥
आस्फालिते प्रतीकारे ज्ञातव्यश्च भिषग्वर ! ।
ऊहापोहैश्च कर्त्तव्यस्तेन सम्पद्यते सुखम् ॥

अथ अभिघातचिकित्सा ।

शिरोऽभिघातजो दोषः शिरोरोगः प्रकीर्त्तितः ।
उरसा चाभिघातेन यकृद् गुल्मश्च जायते ॥
इत्येवञ्च प्रतीकारं कुर्य्यात् रक्तावसेचनम् ।
स्वेदनञ्च प्रयोक्तव्यं भिषजा कर्मसिद्धये ॥
न च तैलञ्च भोक्तव्यं नात्युष्णं कटुकं तथा ।
मत्स्यानि न च मांसानि घनानि च गुरूणि च ॥
श्वेतशालिसमुद्भूतं यूषञ्चैवाढ़कीषु च ।
शशलावकवार्त्ताकुकक्कोलं तण्डुलीयकम् ॥
शतपुष्पाद्यमन्यच्च न च हिङ्गुसमन्वितम् ।
लवणं नातिभोक्तव्यं यदीच्छेदात्मनः सुखम् ॥
व्यायामञ्च व्यवायञ्च दिवानिद्रां तथा क्रमम् ।
वर्जयेत् सुखसम्पत्तिं सुखञ्च प्रतिपद्यते ॥

इति श्रीमदात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने भग्नचिकित्सा नाम षट्पञ्चाशत्तमोऽध्यायः ।

## सप्तपञ्चाशत्तमोऽध्यायः।

### अथ अग्निदग्धचिकित्सा।

आत्रेय उवाच।

अग्निदग्धं नरं दृष्ट्वा तच्च दग्धञ्चतुर्विधम्।
ईषद्दग्धं मध्यदग्धमतिदग्धञ्च वत्सक! ॥
सम्यगदग्धं भिषकश्रेष्ठ! लक्षणं शृणु पुत्रक!।
अतिदग्धं मांसगं स्याद्वातपित्तकफाश्रितम् ॥
सम्यगदग्धञ्च निर्दोषं विज्ञेयञ्च चतुर्विधम्।
त्वचा विशीर्य्यते येन स दाहः पित्तजो भवेत् ॥
सरक्तश्च सपित्तश्च पित्तकोपात् प्रदृश्यते।
कृष्णवर्णञ्च तत्पित्तं मांसगं तीव्रवेदनम् ॥
तस्य वक्ष्यामि संसिद्धं भेषजं भिषजां वर!।
ईषद्दग्धे काञ्जिकस्य लेपनं सुखहेतवे ॥
निम्बपत्राणि सुरसा कुष्ठं धात्रीफलानि च।
ईषद्दग्धे यथालाभे लेपनं भिषगुत्तम! ॥
मध्यदग्धे पयस्याया लेपनी सुखकारिणी।
मधुकुष्ठकमञ्जिष्ठाघृतं पक्वं हितं मतम् ॥
कुष्ठञ्च यष्टीमधुकञ्चन्दनैरण्डपत्रकम्।
मध्यदग्धे हितो लेपो दुग्धेन परिपेषितः ॥
घृतकर्पूरचूर्णञ्च गैरिकं रोध्रमेव च।
शुष्कचूर्णं पूयहरं दग्धं संरोहयत्यपि ॥
आमलक्या तिलं कुष्ठं लेपनं वाग्निदग्धके।
रोध्रोशीरं समङ्गा च लेपनं शीतवारिणा ॥
अतसीतैलमभ्यङ्गमधुयष्टीघृतेन तु।
लेपाभ्यङ्गे हितं दग्धरोहणं दाहवारणम् ॥

अथ धूमपानचिकित्सा ।

धूमोपघाते वमनं क्षीरपानं तथोपरि ।
जले च तरणं श्रेष्ठं धूमदाहोपशान्तये ॥

इति अग्निचिकित्सा ।

इति श्रीमदात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने चिकित्सितस्थानं नाम तृतीयस्थानं समाप्तम् ।

---

## अथ कल्पस्थानम् ।

### प्रथमोऽध्यायः ।

हिमवत् शिखरे रम्ये सिद्धगन्धर्वसेविते ।
तत्रस्थञ्च तपोनिष्ठमत्रिञ्च मुनिपुङ्गवम् ।
कल्पानाञ्च प्रयत्नेन हारीतः परिपृच्छति ॥

हारीत उवाच ।

ज्ञातञ्चैतन्मया तात ! समासेन चिकित्सितम् ।
इदानीं श्रोतुमिच्छामि कल्पस्थानन्तु सुव्रत ! ॥

अथ हरीतकीकल्पः ।

आत्रेय उवाच ।

कल्पानामभया श्रेष्ठा तस्याः शृणु गुणागुणम् ।
स्वर्गस्यामरराजस्य अमृतं पिबतस्ततः ॥
पतिता विन्दवो भूमौ तेभ्यो जाता हरीतकी ।
रसैश्च पञ्चभिर्युक्ता रसेनैकेन वर्जिता ॥
कषायाम्ला च कटुका तिक्ता स्वादुरसा स्मृता ।
लवणेन वर्जिता च शृणु तस्याः पृथक् पृथक् ॥
त्वचाश्रितश्च कटुकं मेदस्तस्याः कषायकम् ।
मेदोऽन्तरे तथा चाम्लं मधुकश्चास्थिसंश्रितम् ॥

तिक्तं तावदम्लरे तु रसैर्युक्ता च पञ्चभिः।
अम्लत्वान्मारुतं हन्ति पित्तं मधुरतिक्ततः॥
कफं कटुकषायत्वात् त्रिदोषघ्नी हरीतकी।
हरीतकी देहभृतां हिता स्यात् मातेव चैषा हितकारिणी च।
वर कदाचित् कुपितापि माता न कुप्यते चाचरितापि पथ्या॥
तस्या उत्पत्तिनामानि वक्ष्यामि शृणु कोविद!।
विजया रोहिणी चैव पूतना चामृता तथा॥
चेतकी चाभया चैव जीवन्ती चैव सप्तमी।
विन्ध्ये च विजया जाता अभया च हिमालये॥
रोहिणी वैदिशे जाता पूतना मगधे स्मृता।
जीवन्तिका सुराष्ट्रायां चम्पायां चेतकी मता॥
अमृता सरयुतीरे इत्येताः सप्तजातयः।
अभया नेत्ररोगेषु शिरोरोगेषु कालिका॥
सर्वप्रयोगे विजया रोहिणी क्षतरोहिणी।
पूतना लेपनार्थे च अमृता च तथा मता॥
चेतकी सर्वतो योज्या जीवन्ती चूर्णयोगतः।
बालानामुपकारार्थं विजयां परिलक्षयेत्॥
त्र्यस्रा च रोहिणी प्रोक्ता अमृता स्थूलमांसला।
पञ्चास्रा चाभया प्रोक्ता पूतना चतुरस्रका॥
त्र्यस्रा तु चेतकी प्रोक्ता पूतना दीर्घमांसला।
विजया नीलवर्णा च पीता स्याद्रोहिणी तथा॥
अमृता कृष्णवर्णा च किञ्चिच्छुभ्राभया तथा।
सार्द्धद्व्यङ्गुलमानेन अमृतां लक्षयेद् बुधः॥
पथ्या भवेत् पथ्यतमा नराणां रोगांश्च सर्वान् विनिहन्ति सद्यः।
आयुःप्रदा तुष्टिमतीवमेधावर्णौजतेजः स्मृतिमातनोति॥
उन्मूलिनी पित्तकफानिलानां सम्मीलिनी बुद्धिबलेन्द्रियाणाम्।

विस्रंसिनी मूत्रशकृन्मलानां हरीतकी रोगहरा नराणाम् ॥
अभया द्व्यङ्गुला प्रोक्ता पूतना चतुरङ्गुला ।
सार्द्धाङ्गुला च जीवन्ती चेतकी स्यात् षडङ्गुला ॥
चेतकी द्विविधा प्रोक्ता आकारवर्णतस्तथा ।
षडङ्गुला हिता प्रोक्ता शुक्ला चैकाङ्गुला स्मृता ॥
श्रेष्ठा कृष्णा समाख्याता रेचनार्थं जिगीषुणा ।
चेतकी वृक्षशाखायां यावत् तिष्ठति तां पुनः ॥
भिन्दन्ति पशुपक्ष्याद्या नराणां कोऽत्र विस्मयः ।
चेतकीं यावद्विधृत्य हस्ते तिष्ठति मानवः ॥
तावद्भिनत्ति रोगांस्तु प्रभावान्नात्र संशयः ।
नृपाणां सुकुमाराणां तथा भेषजविद्विषाम् ॥
कृशानां हितमेवं स्यात् सुखोपायविरेचनम् ।
हरीतकी दरिद्राणामनपायरसायनम् ॥
पथ्यस्यान्तेऽथवा चादौ भक्षेच्चामयनाशिनी ।
तृष्णातुराणां हृदि कण्ठशोषे हनुग्रहे चापि गलग्रहे च ।
नवज्वरे क्षीणबलेन्द्रियाणां न गर्भिणीनां कथिता प्रशस्ता ॥
हरीतकी वा गुड़नागरेण सिन्धूत्थयुक्ता कथिता प्रयोगे ।
आमाशयस्था जठरामयश्च निहन्ति चेन्द्रायुधद्रुमाणाम् ॥
साशारदे वा सितया प्रयुक्ता शुण्ठीगुड़ेनापि हिमे प्रयोज्या ।
ससैन्धवा पिप्पलि शैशिरे च हितो वसन्ते त्रिकटुगुड़ेन ॥
ग्रीष्मे सितानागरकैश्च पथ्या वर्षासु सिन्धूत्थयुता हिता च ।
निहन्ति सर्वामयमेव सद्यो घृतेन पथ्या विहिता हरीतकी ॥
घृतेन देयं मनुजाय कल्कमामानिलं हन्ति नरस्य कोष्ठे ।
दुष्टान् विकारान् हरतीति सद्य एरण्डतैलेन विपाच्य पथ्यम् ॥
खादेत् तदेवानु पिबेच्च तैलं सशूलविष्टम्भजातान् विकारान् ।
सर्वान् जयेत् पित्तकफानिलोत्थान्मूत्रे स्थितं सप्तदिनं महिष्याः

पञ्चाभया मूलपलानि पञ्चक्षीरेण सप्ताहमिति प्रशस्तम्।
क्षीरोदशोषी परतस्तथान्ये एष त्रिसप्तादपरः प्रयोगः॥
वातोदरं शोथमिमं निहन्यात् प्लीहानमानाहमुरोग्रहञ्च।
सपाण्डुरोगञ्च क्रिमींश्च हन्ति हरीतकी धान्यतुषाम्बुसिद्धा॥
सपिप्पलीसैन्धवयुक्तचूर्णं सोद्गारधूमं भृशमप्यजीर्णम्।
निहन्ति सद्यो जनयेत् क्षुधाञ्च कल्कश्च तस्याः सह नागरेण॥
ज्वरो विनश्येत्तु च सैन्धवेन दध्ना च तक्रेण हितातिसारे।
सराजयक्ष्मे मधुनावलिह्यात् मूत्रेण शोथोदरनाशहेतोः॥
सपाण्डुरोगे समशर्करायाः शोषे सदाहे सह मातुलुङ्ग्याः।
रसेन युक्ता विहितातिपथ्या कल्कं समासं कथितं मुनीन्द्रैः॥

इति श्रीमदृर्ष्यात्रेयभाषिते हारीतोत्तरे कल्पस्थाने हरीतकीकल्पो नाम प्रथमोऽध्यायः।

---

## द्वितीयोऽध्यायः।

अथ त्रिफलाकल्पः।

आत्रेय उवाच।

हरीतक्याश्चामलक्या विभीतस्य फलं तथा।
त्रिफलेत्युच्यते वैद्यैर्वक्ष्यामि भागनिर्णयम्॥
एकभागं हरीतक्या द्विभागं च विभीतकीम्।
आमलक्यास्त्रिभागञ्च सहैकत्र प्रयोजयेत्॥
त्रिफला कफपित्तघ्नी महाकुष्ठविनाशिनी।
आयुष्या दीपनी चैव चक्षुष्या व्रणशोधिनी॥
वर्णप्रदायिनी दृष्टा विषमज्वरनाशिनी।
दृष्टिप्रदा कण्डूहरा वमिगुल्मार्शनाशिनी॥
सर्वरोगप्रशमनी मेधास्मृतिकरी परा।

वक्ष्यामि योगयुक्तिञ्च रोगे रोगे पृथक् पृथक् ॥
वाते घृतगुड़ोपेता पित्ते समधुशर्करा ।
श्लेष्मणि त्रिकटूपेता मेहे समधुवारिणा ॥
कुष्ठे च घृतसंयुक्ता सैन्धवेनाग्निमान्द्यहा ।
चक्षुर्धावनके क्वाथो नेत्ररोगनिवारणः ॥
घृतेन हरते कण्डूं मातुलुङ्गरसैर्वमिम् ।
गुल्मार्शो गुड़चूर्णैः सद्यः स्याद् गुणकारकः ॥
क्षीरेण राजयक्ष्माणं पाण्डुरोगं गुड़ेन च ।
भृङ्गराजरसेनापि घृतेन सह योजितः ।
वलीपलितहन्ता च तथा मेधाकरः स्मृतः ।
सक्षीरः सगुड़ः क्वाथो विषमज्वरनाशनः ।
सशर्कराघृतः क्वाथः सर्वजीर्णज्वरापहः ॥

एषा नराणां हितकारिणी च सर्वप्रयोगे त्रिफला स्मृता च ।
सर्वामयानां शमनी च सद्यः सतेजकान्तिं प्रतिमां करोति ॥
शोथे तथा कामलपाण्डुरोगे तथोदरे मूत्रयुता हिता च ।
हितातिसारे ग्रहणीविकारे हिता च तक्रेण फलत्रिका च ॥
क्षीणेन्द्रिये यक्ष्मणि जीर्णरोगे क्षीरेण युक्ता त्रिफला हिता च
स्यान्नेत्ररोगे च शिरोगदे च कुष्ठे च कण्डूव्रणपीड़ने च ॥
मूत्रग्रहे कामलकेऽग्निमान्द्ये हिता जलेन त्रिफला हि कल्कः
सशीतकाले गुड़नागरेण सशर्करा क्षीरयुता तथोष्णे ।
वर्षासु शुण्ठीसहिता नराणां फलत्रिका सर्वरुजाहरा स्यात् ।

इति श्रीमहर्षिात्रेयभाषिते हारीतोत्तरे कल्पस्थाने त्रिफलाकल्पं नाम द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः।

### अथ रसोनकल्पः।

अमृतमथने जातः सुरासुरग्रहो महान्।
जहार वैनतेयश्च चञ्चुना त्रिदिवं गतः॥
संग्रामश्रमसम्प्राप्ते श्रमवेगप्रधाविते।
आरूढ़े वैक्लवं प्राप्ते च्युता ह्यमृतविन्दवः॥
सक्वत्संदूषिते देहे पतितास्तत्र संस्थिताः।
तस्मात् कालवशाज्जातं दुर्भिक्षं द्वादशाब्दिकम्॥
विशुष्काः कानने सर्वा वृक्षकण्टप्रतानिकाः।
तस्माच्च ऋषयः सर्वे प्रकष्टं गहनं गताः॥
तेषां मध्ये जराग्रस्तो गतिहीनोऽतिजर्जरः।
सयष्टिः सरणिक्षुखः शीर्णदन्तावलीमुखः॥
सव्यक्तस्थैः क्षुधापन्नैः ऋषिभिस्तत्र विश्रुतः।
सोऽपि क्षुधातुरः सर्वां पर्य्यटन्नुर्वरां महीम्॥
कुत्रचित् पुण्ययोगेन दृष्टवान् विटपान् शुभान्।
नीलशैवालसङ्काशान् शाद्वलान् बहुलान् भुवि॥
क्षुधासंपीड़नेनापि भुक्तवान् सदलानपि।
षण्मासानन्तरं शुष्कान् विटपान् तदनन्तरम्॥
भुक्तवान् कन्दकान् सोऽपि मासमेकं तथा ऋषिः।
पश्चात् सुभिक्षे सञ्जाते सर्वे चैकत्र संस्थिताः॥
सोऽपि वृद्धो युवा भूत्वा गतस्तत्र यत्र च ते।
तं दृष्ट्वा विस्मयापन्नाः पप्रच्छुः किं कृतं त्वया।
नोक्तवान् स तु किञ्चिच्च रुषा तैः शापितस्ततः॥
यत् त्वया खादितं द्रव्यं तदभक्ष्यं द्विजातिभिः।
दुर्गन्धमपि चित्रञ्च तस्माज्जातं रसोनकम्॥
अथ वीर्य्यञ्च वक्ष्यामि रसोनस्य महामते!।

रसैश्च पञ्चभिर्युक्तो रसोनस्तेन वर्जितः ॥
कट्वम्लवीर्य्यो लशुनो हितश्च स्निग्धो गुरुः स्वादुरसोऽथ बल्यः।
वृष्यश्च मेधास्वरवर्णचक्षुर्भग्नास्थिसन्धानकरः सुतीक्ष्णः ॥
हृद्रोगजीर्णज्वरकुक्षिशूलप्रमेहहिक्कारुचिगुल्मशोफान्।
दुर्नामकुष्ठानलमान्द्यजन्तु समीरणं श्वासकफान् निहन्ति ॥
तेन रसोनकं नाम विख्यातं भुवनत्रये।
कुक्कुटाण्डनिभं ग्रीष्मे शीर्णपर्णं समुद्धरेत् ॥
बद्ध्वा पुटे सुनिर्गुप्तं धारयेत् तन्महामते !।
दीपाग्निदर्शनात् तेन म्रियते दीर्य्यते भुवि ॥
वर्षासु शिशिरे चैव कारयेन्मात्रया युतम्।
रामठं जीरके द्वे च अजमोदा कटुत्रयम् ॥
घृतसौवर्चलोपेतं वातरोगे विशेषतः।
मातुलुङ्गरसेनापि शूलानाहे प्रकीर्त्तितः ॥
दध्ना वातादिशमनो रसोनो विहितो बुधैः।
जाङ्गलानि रसान्येव भोजनार्थे प्रदापयेत् ॥

अथ पेयरसोनः।

निष्पीड्य च रसं तस्य गृहीत्वा मुनिसत्तम !।
दुग्धेन शर्करोपेतं पित्तरोगे पिबेन्नरः ॥
राजयक्ष्मक्षये पाण्डौ कामलायां हलीमके।
शिरोरुजासु सर्वासु रक्तपित्तभ्रमेषु च।
मूर्च्छापस्मारशोषे च हितं चैतद्रसायनम् ॥

इति पेयरसोनः।

परिपिष्य रसोनञ्च तत्समा त्रिवृता मता।
गुडेनैरण्डतैलेन शीतं दत्त्वा च लेहकम् ॥
भवत्येतत् समाहृत्य पाययेन्मूत्ररोगिणम्।
शोफे गुल्मे चामवाते हितमेतत् तथार्शसाम् ॥

हरिणशशकलावातित्तिराणाञ्च मांसं
कफकरमपि मयूरादिसाराश्चजाद्यम्।
घृतमधुररसं वा शालिगोधूमसिद्धं
हितमिति मनुजानां गुग्गुले वा रसोने॥
व्यायामयानातपमैथुनानि क्रोधाध्वजीर्णान् परिवर्जयेच्च।
विवर्जयेद्वापि तथातिसारे मेहामये पाण्डुगुदामये च॥
न गर्भिणीनां न च बालकानां भ्रमातुरे वा न मदातुरे च।
न रक्तपित्ते न च कुष्ठिनेऽपि न रक्तवाते न विसर्पिके च॥
दत्तो रसोनो यदि मूढबुद्ध्या विरेचनं वा वमनं विधेयम्।
न वान्यथा कुष्ठमथो च पाण्डुत्वगदोषरोषं कुरुते नरस्य।
सुयोगयुक्त्यामृतवन्नराणां वीर्य्येन्द्रियं पुष्टिबलं तनोति॥

इति श्रीमदात्रेयभाषिते हारीतोत्तरे कल्पस्थाने रसोनकल्पो नाम
चतुर्थोऽध्यायः।

---

चतुर्थोऽध्यायः।

अथ गुग्गुलकल्पः।

हारीत उवाच।

भगवन्! गुग्गुलो नाम योगवीर्य्यमथोगुणम्।
वक्तुमर्हसि रोगेषु येषु वापि प्रशस्यते।
एवमुक्तस्तु शिष्येण प्रत्युवाच महातपाः॥

आत्रेय उवाच।

मरुभूमौ प्रजायन्ते प्रायशः पुरपादपाः।
भानोर्मयूखैः सततं ग्रीष्मे मुञ्चन्ति गुग्गुलुम्॥
हिमाद्रितो वा हैमन्ते विधिवत् तत् समाहरेत्।
जातरूपनिभं शुभ्रं पद्मरागनिभं क्वचित्॥
क्वचिन्महिषनेत्राभं यच्चदैवतवल्लभम्।

विधानं तस्य विधिवन्निबोध गदतो मम ॥
त्रिदोषशमनो हृद्यः स्निग्धो ह्यग्निप्रदीपनः ।
गुग्गुलुः कटुकः पाके वर्णदो बलवर्द्धनः ॥
आयुष्यः श्रीकरः पुत्र ! स्मृतिमेधाविवर्द्धनः ।
पापप्रशमनः श्रेष्ठः शुक्रार्त्तववर्द्धनः स्मृतः॥
वर्णगन्धरसोपेतो गुग्गुलो मात्रया युतः ।
भेषजैः सह निःक्वाथ्यो यथा व्याधिहरैः पृथक् ॥
मात्रावशिष्टं तं दृष्ट्वा चालयेच्छुक्लवाससा ।
मृन्मये हेमपात्रे च राजते स्फाटिकेऽपि वा ॥
पुण्ये तिथौ शुभे भे च जीर्णाहारसमान्विते ।
हुत्वाग्निं पर्य्युपासीत देवब्राह्मणभक्तितः ॥
प्रविश्य कुसुमाकीर्णे मन्दिरे च समाश्रिते ।
रास्ना गुडूची चैरण्डो दशमूलं प्रसारिणी ॥
क्वाथं तेषां यथायोग्यं यवान्या वातिके पिबेत् ।
पृथक्श्रितैर्जीवनीयैः पिबेत् पित्तामयार्दितः ॥
वासाचन्दनह्रीवेरं मृद्वीका तिक्तरोहिणी ।
खर्जूरश्च परूषश्च तथा जीवककर्षकौ ॥
सपित्तरोगे पानाय क्वाथः स्याद् गुग्गुलान्वितः ।
त्रिफलाव्योषगोमूत्रनिम्बधान्यकपुष्करैः ॥
अमृता दीप्यकः क्वाथः पटोली च कफार्दितः ।
नाडीदुष्टव्रणग्रन्थिगण्डमालार्वुदान्वितः ॥
त्रिफलाक्वाथसंयुक्तं पिबेन्मेही व्रणी तथा ।
किरातक्वामृतनिम्बवृषाख्याश्चोदुरालभाः ।
एषां क्वाथेन संयुक्तं गुग्गुलं पाययेद्भिषक् ॥
गुल्मे कासे क्षते श्वासे विद्रधावरुचौ व्रणे ।
दार्वीपटोलक्वाथेन संयुतं गुग्गुलं पिबेत् ॥

कण्डूपिड़कशोफाद्ये पिबेद् वातकफापहम् ।
पथ्या पुनर्नवा दार्वी गोमूत्रममृतं तथा ॥
एषां क्वाथो हितः पाण्डौ शोफोदरकिलासिनाम् ।
भवेन्मात्रां पलं यावत् कर्षादारभ्य यत्नतः ॥
जीर्णेऽश्नीयान्मुद्गयूषे रसैर्वा जाङ्गलैस्तथा ।
पयसा षष्टिकान्नञ्च शालीनामोदनं मृदु ॥
दिनाः सप्त प्रथमा च मध्यमा द्विगुणाः स्मृताः ।
त्रिगुणाः परमा मात्रा विज्ञेया योगचिन्तकैः ॥
सेवते गुग्गुलं यो वै वर्षेणापि नरः क्रमात् ।
स्थावराज्जङ्गमाच्चैव न स्यादस्य चतिर्विषात् ॥
निर्मुक्तो वलितत्वचोऽपि पलितो वृद्धो युवा जायते
मेधादृष्टिबलौजवीर्य्यमधिकं वृद्धत्वहीनो भवेत् ।
गुल्माष्ठीलहृदामवातशमनः कुष्ठं प्रमेहाश्मरीं
शूलानाहविसर्परक्तशमनो भूतोपसृष्टे हितः ॥

इति श्रीमदर्थात्रेयभाषिते हारीतोत्तरे कल्पस्थाने
गुग्गुलुकल्पो नाम चतुर्थोऽध्यायः ।

इति कल्पस्थानम् ।

---

# अथ सूत्रस्थानम् ।

## प्रथमोऽध्यायः ।

अथ तुलामानविधिः ।

आत्रेय उवाच ।

सर्षपस्य चतुर्थांशोऽणुः । चतुःसर्षपैर्माषः । चतुर्माषैर्वल्लः ।
चतुर्वल्लैः कर्षः । चतुःकर्षैः पलम् । चतुःपलैः कुड़वः ।
चतुःकुड़वैः प्रस्थः । चतुःप्रस्थैराढ़कः । चतुर्भिराढ़कैर्द्रोणः ।
शुष्काणामौषधानाञ्च मानञ्च द्विगुणं भवेत् ।

आर्द्राणामथ सर्वेषां विज्ञातव्यस्तुलाविधिः ॥

सप्तभिर्यवशतैः साष्टषष्टिभिः पलं भवति। चतुर्भिः पलैः कुड़वः। चतुर्भिः कुड़वैः प्रस्थः। प्रस्थैश्चतुर्भिराढ़कः। चतुर्भिराढ़कैः कंसः। २ पले प्रसृतिर्भवेत्।

मस्तुतैलारनालानां क्षीरमष्टगुणं सिता।
मधु मद्यं तथा द्राक्षा खर्जूरं गुग्गुलुस्तथा ॥
रसोनलवणानाञ्च प्रोक्तावार्द्रार्द्रमानकौ।
विड़ालपदिकामात्रं कर्षशब्दोऽभिधीयते ॥
वटोडुम्बरमात्रेण पलमौडुम्बरं विदुः।
चतुःपलं विल्वमानं पलं प्रसृतिमेव च ॥
कुड़वश्चाञ्जलिद्वे च वक्ष्यमाणं महामते!।
चतुरङ्गुलविस्तारं चतुरङ्गुलमुन्नतम् ॥
काष्ठजं मृण्मयं वापि कुड़वं तं विनिर्दिशेत्।
चतुर्भिः कुड़वैः प्रस्थश्चतुः प्रस्थैस्तथाढ़कः ॥
चतुराढ़कः स्याद् द्रोणो मानसंख्या प्रकीर्त्तिता।
वामनञ्च विरेकञ्च प्रदद्यात् कर्षमात्रकम् ॥
सन्तर्पणं पलमात्रं चूर्णं कर्षकमात्रकम्।
क्षारमानं पलार्द्धं च कर्षं चैव हरीतकीम् ॥
पलं रसोनकल्कञ्च पलं गुग्गुलुमेव च।
पलञ्च शूरणं कल्कं दापयेच्च सुपण्डितः ॥
अन्यानि चूर्णलेहानि कर्षमात्राणि दापयेत्।
ज्ञात्वा देहबलं सम्यगुत्तमाधममध्यमम्।
लेहं चूर्णं कषायञ्च दापयेद्विधिवत् सुधीः ॥

इति श्रीमदृष्यात्रेयभाषिते हारीतोत्तरे सूत्रस्थाने तुलामानविधिर्नाम प्रथमोऽध्यायः।

---

# द्वितीयोऽध्यायः।

अथ तैलपाकविधिः।

आत्रेय उवाच।

पाकश्चतुर्विधः प्रोक्तस्तैलानां शृणु पुत्रक!।
खरचिक्कणमध्यस्तु विशोषी चापरो मतः॥
दुग्धारनालक्काथश्च दधि वा शोषयत्यपि।
न चार्द्रता चौषधानां निःफेनो विमलस्तु यः॥
मञ्जिष्ठारससङ्काशो भवेत् स खरपाकगः।
वातघ्नः सोऽपि विज्ञेयो मर्दनाभ्यञ्जने हितः॥
सफेनो मध्यपाको च द्रवो भवति पिण्डितः।
नातिफेनमफेनं वा मध्यपाकं विनिर्दिशेत्॥
वस्तौ पाने च शस्तश्च त्रिदोषघ्नं भिषग्वर!।
सफेनश्चन्द्रभो यस्य भवेत् स्वच्छसमो द्रवः॥
स च चिक्कणकः पाको नस्ये प्रोक्तो हितः सदा।
सधूमश्चातिदग्धश्च दग्धगन्धरसस्तथा॥
विज्ञेयो वावशोषी च वर्जितः सर्वकर्मसु।
मर्दने खरपाकश्च वस्तौ चिक्कणपाकतः॥
वस्तौ पाने मध्यपाको विशोषी वर्जितस्तथा।
पक्षे सिध्यति तैलञ्च सप्ताहे घृतमेव च।
कषायः प्रहरेणापि यत्नं नैव प्रसाधयेत्॥

इति श्रीमदत्र्यात्रेयभाषिते हारीतोत्तरे सूत्रस्थाने तैलपाकविधिर्नाम
द्वितीयोऽध्यायः।

## तृतीयोऽध्यायः।

अथ निरूहवस्तिकर्मविधिः।

आत्रेय उवाच।

चतुरङ्गुलां वेणुमयीं नाड़ीं प्रतिलक्षणं कृत्वा तया वस्ति-प्रतिकर्म कुर्य्यात्।

नाति चोष्णे च काले च न शीते न च भोजिते।
न निद्रालौ च मूत्रार्त्ते विष्ठार्त्ते न च पुत्रक!।
वस्तिकर्म निरूहञ्च कारयेत्तं निरस्य च॥

आदौ मूत्रविष्ठोत्सर्गं कृत्वा गुदं प्रक्षाल्य नातिशिथिल-शय्यायां शाययित्वा वामाङ्गे वामपादं दक्षिणाङ्गे दक्षिण-पादञ्च सङ्कोच्य जङ्घोपरि संस्थाप्य गुदाभ्यन्तरे द्व्यङ्गुलमात्रां नाड़ीं सञ्चारयेत् सुधीः। ततः शनैः शनैर्वस्तिं निष्पीड्य द्विपलपरिमिततैलेन निरूहं कुर्य्यात्। निरूहानन्तरं शनै-रुत्तानं शाययित्वा ऊर्द्धीकृत्य च पश्चात् सङ्कोच्य पाणिभिः पञ्चवारान् स्फिक्पिण्डान् त्रोटयेत्। ततः स्वस्थं कृत्वा ...पि आमाशयं मलस्थानं बोधयति। वस्त्युदरवातान् दोषान् निवारयति। पण्डितास्तं वस्तिनिरूहं तद्वस्तिकर्म च विदुः।

इति श्रीमदात्रेयभाषिते हारीतोत्तरे सूत्रस्थाने निरूहवस्तिकर्मविधिर्नाम तृतीयोऽध्यायः।

---

## चतुर्थोऽध्यायः।

अथ स्वेदनविधिः।

स्वेदः सप्तविधः प्रोक्तो लोष्टस्वेदो वाष्पस्वेदोऽग्निज्वालास्वेदः।
घटस्वेदो जलस्वेदो फलस्वेदो बालुकास्वेदश्च॥

न तैलेन विना स्वेदं कदाचिदपि कारयेत्।
तैलेनाभ्यञ्जयेत् स्वेदं स भवेद्गुणकारकः॥
तीव्रज्वरे दाहशोषे तथातीसारपीड़िते।
मूर्च्छाभ्रमे च दाहार्त्ते विषे स्वेदं न कारयेत्॥
शूलशोथातुरे वाते शीतश्लेष्मातुरेषु च।
एतेषां शस्यते स्वेदो नराणां सुखदायकः॥

इति श्रीमदात्रेयभाषिते हारीतोत्तरे सूत्रस्थाने स्वेदनविधिर्नाम चतुर्थोऽध्यायः।

---

## पञ्चमोऽध्यायः।

अथ रक्तावसेचनविधिः।

आत्रेय उवाच।

रक्तावसेचनं चतुर्भिः प्रकारैर्भवति।
शिराविरेचनेनापि अलावूभिस्तथैव च॥
अन्त्याशृङ्गैर्जलौकाभिः रक्तञ्च स्रावयेद् बुधः।
पूर्वाह्णे चापराह्णे च नात्युष्णे नातिशीतले॥
यवागूपरिपीतस्य शोणितं मोचयेद्भिषक्।
शिरोरोगेषु सर्वेषु नासामध्यपुटे तथा॥
असृजं रेचयेद् यत्नात् सर्वदा भिषगुत्तमः।

ललाटमध्ये भ्रुवोरुपरिष्ठादङ्गुलद्वयं त्यक्त्वा शिरां बन्धयेत्। वाह्वोः कूर्परमध्ये शिरां बन्धयेत्। मणिबन्धसन्धौ अङ्गुष्ठमूलचतुष्टयमङ्गुलञ्च विहाय शिरां बन्धयेत्। नातिपार्श्वे चतुरङ्गुलं विहाय शिरां बन्धयेत्। घण्टिकां शिरां पादे बन्धयेत्। अपरमपि ग्रन्थविस्तारभयान्नोक्तम्। अलावुशृङ्गैः रक्तावसेचनं सर्वैरपि ज्ञातम्।

अथ रक्तलक्षणम् ।

सकृष्णं फेनिलं श्यामं रक्तं तद्वातदोषजम् ।
सर्वलक्षणसम्पन्नं विज्ञेयं तत् त्रिदोषजम् ॥

इति श्रीमहर्ष्यात्रेयभाषिते हारीतोत्तरे सूत्रस्थाने रक्तावसेचन-विधिर्नाम पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

अथ जलौकाविचारविधिः ।

आत्रेय उवाच ।

जलौकाश्चतुर्विधाः प्रोक्ता इन्द्रायुधा रोहिणी कालिका धूम्रा चेति ।

अथ इन्द्रायुधा ।

नीलवर्णा पार्श्वरक्ता तीक्ष्णमुखी गम्भीरनिर्मलोदके पाषाणसन्धौ च प्रविशति । तया विद्रध्युदरदाहशोथमूर्च्छा-विषाद्युपद्रवयति ।

अथ रोहिणी ।

नीलवर्णा पार्श्वपीता शङ्कमुखी पद्मनाले प्रविशति । तया विद्रधिविसर्पशोथाद्युपद्रवयति ।

अथ कालिका ।

कृष्णा कालिका मत्स्याशये दूरे त्यज्या ।

अथ धूम्रा ।

धूम्रा कपोतमहिषवर्णा पीतोदरी अर्द्धचन्द्रमुखी कर्दमे कलुदोषके प्रविशति । सा रक्तावसेचनयोग्या निरुद्रवा च ।

शावस्थानं काञ्जिकेन प्रक्षाल्य नवनीतेन म्रक्षयित्वा उष्णोदकेन प्रक्षालयेत् । पश्चात् तत्र जलौका विचारणीया । जलौका रक्तपूर्णा पश्चात् पातिता । तस्या मुखं लवणेन

मूत्रेण वा प्रक्षालयेत्। अथवा शनैर्गोस्तनवद् दुह्यते। पुनर्नवनीतेन मुखमालिप्य विचारणीया। दुष्टरक्ते विनिर्गते दंशं काञ्जिकेन प्रक्षाल्य घृतमधुना अभ्यज्य वस्त्रेण बध्नीयात्।

इति श्रीमहर्ष्यात्रेयभाषिते हारीतोत्तरे सूत्रस्थाने
जलौकाविचारविधिर्नाम षष्ठोऽध्यायः।

इति सूत्रस्थानं समाप्तम्।

---

# शारीरस्थानम्।

## प्रथमोऽध्यायः।

अथ शारीराध्यायः।

आत्रेय उवाच।

पञ्चभूतात्मकं देहं पञ्चेन्द्रियसमायुतम्।
सप्तधातुगुणोपेतं दशवातात्मकं विदुः॥
जीवो मनस्तथाकाशस्तथैव त्रिगुणात्मकः।
शुक्रशोणितसम्भूतं शरीरं दोषभाजनम्॥
पञ्चभूतमयं चैतद् विज्ञेयं भिषजां वर!।
चतुर्विधं शरीरं स्याद् बाल्यं प्रौढ़ं प्रगल्भकम्॥
स्थविरञ्च तथा प्रोक्तं बाल्यमल्पशरीरकम्।
'षोड़शं वत्सरं यावद् बाल्यं तावत् प्रवर्त्तते॥
धातूनाञ्च बलं तत्र धातुमूलं शरीरकम्।
धातूनां पुष्टियोगेन शरीरञ्चातिवर्द्धते॥
जीवितं धातुमूलन्तु मृत्युर्धातुक्षयादपि।
क्षीणधातोश्च योगेन लभते स्वल्पजीवनम्॥
नरो धातुबलेनापि जीवितञ्चात्र दृश्यते।
तस्माच्च मैथुनात् सम्यक् जायते गर्भसम्भवः॥

आदौ धातुबलं तस्मात् सत्वं तस्माद्रजो विदुः।
रजसा जायते कामः कामात् सुरतसङ्गमः॥
मासि मासि ऋतुः स्त्रीणां अतो ऋतुमती स्त्रियः।
रजः सप्तदिनं यावत् ऋतुश्च भिषजां वर!॥
सप्तरात्राद् योनिशुद्धिस्तस्मादृतुमती भवेत्।
दृश्यते च रजः स्त्रीणां विना योगेन पुत्रक!॥
दृश्यते न विना योगात् फलं स्त्रीणान्तु पुत्रक!।
संशयाद् विस्मितश्चित्ते हारीतः परिपृच्छति॥

हारीत उवाच।

संयोगेन विना प्राज्ञ! कथं गर्भो न जायते।
संयोगेन विना पुष्पं फलं वा न कथं भवेत्॥
वृक्षवच्च कथं स्त्रीणां फलोत्पत्तिः प्रदृश्यते।
एतत् पृष्टो महाचार्य्यः प्रोवाच ऋषिपुङ्गवः॥

आत्रेय उवाच।

विरुद्धानाञ्च वल्लीनां स्थावराणाञ्च पुत्रक!।
तत्र धातुसमं वीजं सह योगेन वर्त्तते॥
न भिन्नदृष्टिस्तस्यैव दृश्यते शृणु पुत्रक!।
स्थावराणाञ्च सर्वेषां शिवशक्तिमयं विदुः॥
निश्चलोऽपि शिवो ज्ञेयो व्याप्तशक्तिर्महामते!।
तत्र स्त्रीपुरुषगुणा वर्त्तन्ते समयोगतः॥
आम्रपुष्पं फलं तद्वद् वीजं शुक्रमयं विदुः।
स्त्रीणां रजोमयं रेतो वीजाख्यमिन्द्रियं नरे॥
तस्मात् संयोगतः पुत्रो जायते गर्भसम्भवः।
प्रथमेऽहनि रेतश्च संयोगात् कललं च यत्॥
जायते वुद्वुदाकारं शोणितञ्च दशाहनि।
घनं पञ्चदशाहे स्याद् विंशाहे मांसपिण्डकम्॥

पञ्चविंशतमे प्राप्ते पञ्चभूतात्मसम्भवः ।
मासैकेन च पिण्डस्य पञ्चतत्त्वं प्रजायते ॥
पञ्चाशद्दिवसे प्राप्ते अङ्कुराणाञ्च सम्भवः ।
मासत्रये तु सम्प्राप्ते हस्तपादौ प्रवर्त्तते ॥
सार्द्धमासत्रये प्राप्ते शिरश्च सारवद्भवेत् ।
चतुर्थके च लोमानां सम्भवस्तत्र दृश्यते ॥
पञ्चमे च सुजीवः स्यात् षष्ठे प्रस्फुरणं भवेत् ।
अष्टमे मासि जाते च अग्नियोगः प्रवर्त्तते ॥
मासे तु नवमे प्राप्ते जायते तस्य चेष्टितम् ।
जायते तस्य वैराग्यं गर्भवासस्य कारणात् ॥
दशमे च प्रसूयेत तथैकादशमेऽपिवा ।
अथ दोषबलेनापि गर्भो वापि प्रसूयते ॥
वातसम्प्रेरिते गर्भे अपूर्णे दिवसे यदि ।
प्रसूतये वाप्यथ तद्गर्भे बालः प्रदृश्यते ॥
अथ वक्ष्यामि देहस्य वर्णज्ञानं महामते ! ।
नररेतोऽधिकत्वेन तथा शुक्राधिकेन तु ॥
हीनैरसेन्द्रियैर्वापि जायते पुरुषाधिकः ।
स्त्रीरेतसोऽधिकत्वेन हीनशुक्रेन्द्रियादपि ॥
रजसाप्यधिकत्वेन स्त्रीसम्भूतिः प्रजायते ।
सप्तधातुबलेनापि प्रकृत्या विकृतेः समे ॥
ऋतुव्याप्तरजःस्त्रीणां या या भवति भावना ।
सात्त्विकी राजसी वापि तामसी वापि सत्तम ! ॥
तादृशं जनयेद् बालं गुणैर्वा तादृशैरपि ।
या च भावयते चित्ते भ्रातरं पितरं नरम् ॥
येन वा तेन सदृशं सूयते सा भिषग्वर ! ।
वातेन श्यामः पुरुषो वातप्रकृतिसम्भवः ॥

पित्तेन गौरो भवति पित्तप्रकृतिवान् भवेत्।
श्लेष्मणा जायते स्निग्धः श्यामश्च लोमशस्तथा॥
दीर्घशिरोरुहः स्थूलो दीर्घप्रकृतिसंयुतः।
वातरक्तेन कृष्णोऽपि पित्तरक्तेन पिङ्गलः॥
पित्तवांश्च नरो रूक्षः स्निग्धः श्यामः कफात्मजा।
भृङ्गराजाञ्जनाकारं वातेन दृष्टिमण्डलम्॥
सूक्ष्मलोमा च कृष्णश्च रूक्षमूर्द्धजसंयुतः।
यस्य वातेन तं विद्धि नखसूक्ष्मासितच्छविम्॥
पित्तेन पीतश्च भवेदलोमा पिङ्गेक्षणाभासपिशङ्गकेशः।
आलोमशः पीतनखप्रभः स्यात् क्षुधार्त्त दृप्तश्च निरूष्मणा सः॥
स लोमशो दृप्तकठोरकेशः श्यामच्छविर्दृप्ततनुर्विशालः।
सुस्निग्धदन्तः सितनेत्ररश्मी नखच्छविः पाण्डुसुदीर्घनासः॥

इति देहप्रकृतिः।

समवीर्य्यरजस्त्वेन नरः स्त्रीप्रकृतिर्भवेत्।
नपुंसकमिति ख्यातं न स्त्री न पुरुषो वदेत्॥
दोषधातुविशेषेण सङ्गे सत्यङ्गसम्भवः॥
कृतभ्रान्ते च सम्भोगे द्वाभ्याञ्च द्रवते मनः।
दृश्यते यमलोत्पत्तिरन्यचित्तप्रियङ्करी॥

इति अपत्ययुग्मम्।

समदोषबलेनापि प्रकृत्या विकृतेरपि।
समो भवेदसृक्शुक्रो नपुंसकसमुद्भवः॥

इति नपुंसकः।

अथ बीजलेहिपञ्चभूताग्निना परिपक्वं कललं क्रियते। सोऽपि चान्तःस्थो वायुर्बुद्बुदाकारो बाह्यवातेन सम्भृतो भवति। स च कललं भूत्वा पञ्चभूताग्निना पिण्डं जनयति। तच्च पिण्डं परिपाकं गतं घनसङ्घातञ्च जातं व्यानवातेन पञ्चतत्त्वानि

हस्तपादादीन् शिरोऽवयवान् सञ्जनयति। अन्तःस्थो वायुरेकोऽपि नानास्थानं समाश्रित्य देहाकारं करोति। उदानो गलहृदयसंस्थितो देहमुखद्वारं प्रकाशयति। अपानवायुरधःस्थोऽपानद्वारं विशोधयति। एतेचान्तःस्थाः पृथक् पृथक् मार्गं छिद्रं कृत्वा निर्गच्छन्ति। तान्येव नवद्वाराणि मुखघ्राणकर्णनेत्रापानमोहनानि चैतानि द्वाराणि वातेन प्रभवन्ति तत्रान्तःस्थो वायुः प्रतानत्वेन हस्तपादाद्यानवयवान् सञ्जनयति॥

त्वङ्मांसकेशरोमास्थि भूभागं जनयेत् तथा।
रसं रक्तञ्च लालाञ्च मूत्रं शुक्रं जलानि च॥
अग्निं पित्तञ्च नेत्रञ्च तमः क्रोधादि पञ्चकम्।
श्रुतिः स्पर्शस्तथोच्छ्वासः स्वेदसंक्रमणादि च॥
वाता ह्येते परिज्ञेया अन्या प्रकृतिरेव च।
मनो बुद्धिस्तथा निद्रा आलस्यं मद एव च॥
शून्यात् पञ्च प्रजायन्ते देहे देहे व्यवस्थिताः।
वातरक्तेन त्वग्देहे मासं त्वगाश्रितं मतम्॥
शुक्रश्लेष्मोद्भवो मेदो रसोऽस्थिरक्तसम्भवः।
पित्ताश्रितं हृदयस्थं वातरक्तमयं यकृत्॥
रक्तश्लेष्मरसाश्रित उरः कफरक्तश्लेष्ममयः प्लीहा कफरक्तमयः।
पञ्चभूतमयं देहमाकाशं शून्यमेव च।
शून्याद् वायुः समुत्पन्नो वायोः प्राणः प्रजायते।
प्राणांशश्च तथा जातः सर्वसत्त्वे प्रतिष्ठितः॥

इति सत्त्वसम्भवः।

आकाशाज्जलमुत्पन्नं जलाज्जाता वसुन्धरा।
तस्मात्तेजस्तथा जातं तेजसो जायते तमः॥
पञ्चभूतात्मके देहे पञ्चेन्द्रियसमायुते।

भूतानाञ्च प्रधानो य आकाशमिति शब्दितः ॥

आकाशात्तेजस्तेजसो दर्पो दर्पात् पराक्रमस्तस्मादहङ्कारस्ततः कोपः कोपात् तमस्तमसः पापमिति। आकाशात् सत्त्वं सत्त्वात् सत्यं सत्यात् तपस्तपसो नयो नयाद् विवेको विवेकात् शान्तिः शान्त्या धर्म इति। सत्त्वाद्रजो रजसः कामो कामाल्लौल्यं लौल्यादसत्यमसत्यात् पापमिति। रसात् कामः कामादभिलाषोऽभिलाषात् प्रजा प्रजाया मैत्री मैत्र्याः स्नेहः स्नेहात् मोहो मोहात् माया ततो भ्रान्तिर्भ्रान्त्या मिथ्या ततोऽविद्या अविद्यायाः पुण्यपापानि पुण्यपापेभ्यः सम्भव इति।

सत्त्वाच्च तम एव स्यात् जाग्रते स्वपते प्रभुः।
तमसा प्रावृतो देहो व्योम्ना च शून्यतां गतः ॥
देहं विश्रमते यस्मात् तस्मान्निद्रा प्रकीर्त्तिता।
नासाग्रे च भ्रुवोर्मध्ये लीयते चान्तरात्मना ॥
तस्माच्चेतो भवेत् तत्र निद्रा व्यालीयते नृणाम्।
सत्त्वात् तेजः समाख्यातं तेजसा पित्तमेव च ॥
जायते वायुर्मनसः स्वपते तमसावृतः।
वायोस्तमः समायोगात् स्वप्नावस्थेति गीयते।
सत्त्वं तमस्तथा वायुर्वर्त्तते चैकयोगतः ॥

आहारनिद्रा च क्षुधा च तृष्णा भयञ्च मात्सर्य्यमदश्च मोहः।
क्रोधाभिलाषः सुखतृप्तिशान्तिर्भवन्ति वै देहभृतां शृणु त्वम् ॥

आहारस्येच्छया देहे चरते च हुताशनः।
तृप्तिं वापि समाप्नोति रसास्वादनजस्य च ॥

यदा यदा शोषयते मलानामग्निस्तदा तृप्तिमिवातनोति।
यदा च यस्यैव भवेदतृप्तिस्तदेव तृष्णां प्रतनोति चेतः ॥

इति श्रीमदृष्यात्रेयभाषिते हारीतोत्तरे शारीरस्थाने शारीराध्यायो नाम प्रथमोऽध्यायः। इति शारीरस्थानं समाप्तम्।

अथ परिशिष्टाध्यायः।

इति प्रोक्तः शरीरार्थस्तद् व्यासेनोपदिश्यते।
श्रुत्वा चैनं महातेजा हारीतो मुनिसत्तमः॥
प्रणिपत्य गुरुं श्रेष्ठं हृष्टान्तःकरणस्ततः।
जगाम स्वर्णदीतीरं स्नानध्यानरतस्तथा॥
य एतत् पठते शास्त्रं महर्षेर्वचनाच्छ्रुतम्।
सर्वपापविनिर्मुक्तो नीरुजः सुखमश्नुते॥
आदौ यद् ब्रह्मणा प्रोक्तमत्रिणा तदनन्तरम्।
धन्वन्तरिणा प्रोक्तञ्च अश्विना च महात्मना॥
एवं वेदसमं ज्ञेयं नावज्ञाकारणं मतम्।
अन्यैश्च बहुधा प्रोक्तं नानाशास्त्रविशारदैः॥
अमीषां च मतं ग्राह्यं तस्मात् सर्वे समं विदुः।
चरकः सुश्रुतश्चैव वाग्भटश्च तथापरः॥
मुख्याश्च संहिता वाच्यास्तिस्र एव युगे युगे।
अत्रिः कृतयुगे वैद्यो द्वापरे सुश्रुतो मतः॥
कलौ वाग्भटनामा च गरिमात्र प्रदृश्यते।
वैष्णवी चाश्विनी गार्गी तत्र माध्याह्निकापरा॥
मार्कण्डेया च कथिता योगराजेन धीमता।
संहिता ऋषिभिः प्रोक्ता मन्त्रैर्नानाविधैर्विभो!॥
अग्निवेशश्च भेड़श्च जातुकर्णः पराशरः।
हारीतः क्षारपाणिश्च षड़ेते ऋषयस्तु ते॥
यथा सिंहो मृगेन्द्राणां यथानन्तो भुजङ्गमे।
देवानाञ्च यथा शम्भुस्तथात्रेयोऽस्ति वैद्यके॥
तस्माद् यत्नेन सद्वैद्यैः सादरार्द्रसुमानसैः।
अर्चनीयोऽनुमन्तव्यो दास्यते सुखसम्पदः॥

इति श्रीमदात्रेयभाषिते हारीतोत्तरे परिशिष्टाध्यायः।

इति हारीतसंहिता समाप्ता।

पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए,

*PANDIT JIBANANDA VIDYASAGARA B, A.*

*Superintendent Free Sanskrit College, Calcutta.*

